PolioPlus



# IMMUNIZATION AN ASSURANCE OF GOOD HEALTH TO CHILDREN

## VACCINATIONS When and How Many

| Age to Start Vaccination | Name of Vaccine | Name of Disease | How Many Times |
|---|---|---|---|
| Birth | **BCG** | **Tuberculosis** | Once |
| 6 weeks | **Polio** | **Polio** | Three times with intervals of at least one month |
| 6 weeks | **DPT** | **Diphtheria Pertussis (Whooping Cough) Tetanus** | Three times with intervals of at least one month |
| 9 months | **Measles** | **Measles** | Once |

**Babies should receive all vaccinations by the time they are twelve months old.**

Pregnant women should get themselves vaccinated against Tetanus (TT) twice—in an interval of at least one month—during the later stages of pregnancy.

**HEALTHY CHILD—NATION'S HOPE & PRIDE**

Design courtesy : World Health Organisation

# सङ्गणकयन्त्रम् अस्ति किम् ?

| | |
|---|---|
| सतीशः - भोः, भवतः कार्यालयः कदा उद्घाट्यते ? | Hay Ramesh ! at what time does your office open ? |
| रमेशः - किमर्थं भोः ? | Why ? |
| स - अहं ह्यः प्रातः एकादशवादने आगतवान् आसम् । तदा कार्यालयः उद्घाटितः न आसीत् । | Yesterday I went there at 11 O' clock, but your office was not open. |
| र - ह्यः आयव्ययाधिकारी आगच्छेत् इति वार्ता आसीत् । अतः न उद्घाटितः । | I got the news that incometax officer would visit our office. Therefore I did not open the offfice. |
| स - तथा वा ? आदिनं भवान् किं कृतवान् ? | Is it so ? Then what did you do the whole day ? |
| र - अहं गणनाकार्यं समापितवान् । | I completed my accounts work. |
| स - भवतः समीपे गणनाकार्यार्थं सङ्गणकयन्त्रम् अस्ति किम् ? | Do you have computer to do accounts ? |
| र - नास्ति । क्रेतव्यम् । | I don't have. But I have to purchase . |
| स - कदा भवान् क्रेष्यति ? | When will you purchase ? |
| र - इतोऽपि न निश्चितम् । | Not yet decieded . |
| स - शीघ्रं निर्णयं करोतु । अहं न्यूनमूल्येन दापयामि । | Decide early. I will get you at a lower price. |
| र - अधुना सामान्यसङ्गणकयन्त्रस्य मूल्यं किम् अस्ति ? | How much does an ordinary computer costs now ? |
| स - प्रायः ३०,००० रूप्यकाणि । | Arround Rs.30,000 /- |
| र - भवान् केन मूल्येन मह्यं दापयति ? | At what price will get me one ? |
| स - निश्चितमूल्यात् ५,००० रूप्यकाणि न्यूनीकारयामि । | I will get you for Rs. 5,000 less than the catalogue price. |
| र - तर्हि वयं कदा गच्छामः ? | When shall we go then ? |
| स - श्वः । | Tomorrow. |
| र - अस्तु तर्हि । श्वः पुनः मिलाव । | Okay then let us meet tomorrow again. |



# चन्दमामा

सप्टम्बर् - १९९७



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००

# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'








## अनैक्यशापः

भारतं प्रति वाणिज्यार्थं ब्रिटन्देशस्य "ईस्ट् इण्डिया कम्पनी" नामिका संस्था आगता । एवं वाणिज्यार्थम् आगतासु इयं संस्था एव प्रथमा न आसीत् । ततः पूर्वं - पोर्चुगल्, हालण्ड्, फ्रान्स् इत्यादीनां देशानां संस्थाः अपि अत्र आगताः आसन् एव । परन्तु ब्रिटन्जनाः अतीव महत्त्वाकाङ्क्षिणः आसन् । ते भारतदेशं दासीकृत्य शासनं कर्तुम् इच्छन्ति स्म । १७६५तमे वर्षे यवनशासकेन केनचित् सह जातस्य सन्धेः अनुगुणं उडिसा-वङ्ग-बिहारराज्येषु आंग्लेयानां लघुरूपं शासनम् आरब्धम् । कालान्तरे अस्य शासनस्य नाम "जोन् कम्पनीराज्" इति अभवत् ।

गूढतन्त्रैः आंग्लेयाः भारतस्य अन्यान् अपि प्रदेशान् स्वायत्तीकृतवन्तः । ते भारतीयानां सम्प्रदायान् श्रद्धाः च तिरस्कृतवन्तः । ते भारतीयैः राजभिः सह सौहार्दसम्बन्धं प्रतिज्ञातवन्तः आसन्, परन्तु तदा तदा सौहार्दं विस्मृत्य अत्रत्यान् राज्ञः वञ्चितवन्तः ।

एतस्याः दुःस्थितेः कारणं केवलं "जोन्कम्पनी" एव आसीत् किम् ? न । सत्यं, ते कम्पनीजनाः धार्ष्ट्यर्युक्ताः आसन्, परन्तु यदि भारतीयाः राजानः सङ्घटिताः अभविष्यन् तर्हि प्रायः तेषां कम्पनीजनानां जयः न अभविष्यत् । दौर्भाग्यवशात्, अत्रत्याः राजानः परस्परं कलहायमानाः युद्धं कृतवन्तः । यद्यपि तेषु केचन राष्ट्रभक्ताः आसन्, तथापि ते किमपि विशिष्टं साधयितुं न शक्तवन्तः । राष्ट्रभक्तिहीनाः राजानः "जोन्कम्पनी" संस्थायाः साहाय्येन अन्यान् प्रातिवेशिकान् राज्ञः पीडयन्ति स्म ।

परन्तु भारतस्य साधारणजनाः कथम् आसन् ? ते ब्रिटिष्शासनं मौनेन अङ्गीकृतवन्तः आसन् किम् ? न । सर्वथा न । यदा शक्यते तदा ब्रिटिश्-विरोधं कृतवन्तः एव ।

अनैक्यशापग्रस्तता एव अस्माकं पारतन्त्र्यस्य कारणं जातम् इत्येतत् सर्वदा बुद्धौ स्थापयित्वा स च शापः अस्मान् पुनः यथा न बाधेत तथा जागरूकता आश्रयणीया अस्माभिः ।

सम्पुटः - १४ सप्टम्बर् - १९९७ सञ्चिका - ६

प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. ७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | |
|---|---|---|
| अङ्गारः | - | charcoal |
| अण्डम् | - | egg |
| अनुरूपम् | - | suitable |
| अनुरोधः | - | force |
| अब्रह्मण्यम् | - | used as an exclamation meaning 'help' |
| अभिज्ञानम् | - | a token of recognition |
| अन्तर्हितः | - | disappear |
| अरा | - | the spoke of a wheel |
| अवसरः | - | occasion |
| उत्सङ्गः | - | edge |
| उपत्यका | - | the slope of a mountain |
| कनीनिका | - | eye ball |
| कपालम् | - | skull |
| काचकम् | - | glass |
| किणः | - | a scar |
| कुंल्या | - | canal |
| खातः | - | valley |
| गुल्मम् | - | bush |
| झटिति | - | immediately |
| त्रिका | - | pulley |
| धीवरः | - | fisherman |
| धूलिसात् | - | to destroy |
| निखातवान् | - | burried |
| निरीक्षा | - | wish/desire |
| पत्रभारः | - | paper weight |
| प्लवमानः | - | floating |
| प्रतिवेशी | - | neighbour |
| प्राकारः | - | enclosure |
| महागोलकास्त्रम् | - | cannon |
| मस्तिष्कम् | - | brain |
| मृच्छदः | - | tiles |
| यौतकम् | - | the things / gifts which are given in marriage |
| लिपिकारः | - | clerk |
| वधकः | - | murderer |
| श्यालः | - | brother-in-law |
| सघोषविक्रयणसंस्था | - | auctioneer |
| समञ्जनम् | - | adjustment |
| सोढुम् | - | to bear/tolerate |
| हर्म्यम् | - | bungalow |

वार्ताविशेषः -

# फ्रान्स्देशे नवसर्वकारः

इंग्लेण्ड्देशे शासकपरिवर्तनविषये वयं गतसञ्चिकायां पठितवन्तः । सः परिवर्तनवायुः इंग्लिष्कुल्याद्वारा वाति इति भाति । यतः जून्-प्रथमदिनाङ्के फ्रान्स्देशे प्रवृत्तेन निर्वाचनेन अपि शासकस्य परिवर्तनं जातमस्ति । इंग्लेण्डदेशे कन्सर्वेटिव्पक्षस्य पराजयस्य कारणतः १८ वर्षाणाम् अनन्तरं लेबर्पक्षेण अधिकारः प्राप्तः अस्ति । तथैव फ्रान्सदेशे अपि कन्सर्वेटिव्पक्षेण पयाजयः प्राप्तः अस्ति । १८ वर्षाणाम् अनन्तरं वामपक्षीयाः अधिकारं प्राप्तवन्तः सन्ति । सोषलिस्ट्पक्षस्य नायकः लयनेल् जास्पिन् प्रधानमन्त्री जातः अस्ति अधुना । अत्र निश्चितसमयात् एकवर्षपूर्वमेव निर्वाचनं प्राचलत् । अधुना कन्सर्वेटिव्पक्षस्य जाक्बेस् चिराक् अत्र अध्यक्षः अस्ति । कन्सर्वेटिव्पक्षस्य एलन्जूपरः यदा प्रधानमन्त्री आसीत् तदा एषः अध्यक्षः अभवत् । 'अस्मदीयः पक्षः एव अधिकारं प्राप्स्यति' इति विश्वासेन अध्यक्षः प्रधानमन्त्री च संमिल्य पूर्वमेव निर्वाचनं कारितवन्तौ आस्ताम् ।

किन्तु सर्वं तयोः चिन्तनानुगुणं न अभवत् । लोकसभायाः ५७७ स्थानेषु कन्सर्वेटिव्पक्षेण केवलं २५३ स्थानेषु जयः प्राप्तः । २७४ स्थानेषु वामपक्षीयाः जितवन्तः । ततः पूर्वं केवलं २४ स्थानेषु जितवन्तः वामपक्षीयाः अस्मिन् समये ३८ स्थानेषु जितवन्तः सन्ति । शासनं कर्तुं स्वस्य बहुमतं नास्ति इति सोषलिष्ट्पक्षेण कम्यूनिष्ट्पक्षस्य साहाय्यं स्वीकृतम् अस्ति । अधुना सम्मिश्रशासनस्य १४ जनात्मके मन्त्रिमण्डले कम्यूनिष्ट्पक्षीयौ द्वौ स्तः ।

फ्रान्स्देशे अध्यक्षस्य एव पूर्णः अधिकारः भवति शासने । इदानीम् अध्यक्षः कन्सर्वेटिव्पक्षीयः, सर्वकारः च तस्य विरोधपक्षीयाणाम् अस्ति । तथापि ''वयं देशस्य हितदृष्ट्या परस्परं गौरवपूर्वकं व्यवहरन्तः शासनं कर्तुं शक्नुमः'' इति विश्वासं प्रकटितवान् अस्ति प्रधानमन्त्री जास्पिन्वर्यः ।

५९ वर्षीयः जास्पिन्वर्यः पूर्वं विश्वविद्यालये प्राध्यापकः आसीत् । विद्यामन्त्रिपदे स्थित्वा अपि कार्यं कृतवान् अस्ति सः । ''फ्रेञ्चजनाः यथार्थम् एव इच्छन्ति । कन्सर्वेटिव्पक्षस्य विचाराः केवलम् वागाडम्बररूपाः एव । एतत् सत्यं जनानां पुरतः उपस्थापनीयम्'' इति सः वदति ।

''फ्रान्स्देशे निरुद्योगसमस्या महता प्रमाणेन दृश्यते इति तु सत्यम् एव'' इति सः अङ्गीकरोति । अतः उद्योगावकाशकल्पनम् आद्यं कार्यं मन्यते सः । ''जनाः अस्मत्तः बहु निरीक्षां कुर्वन्तः सन्ति । सर्वाणि कार्याणि युगपत् कर्तुं न शक्यन्ते । किन्तु तेषां अपेक्षापूरणार्थं क्रमशः न्याय्यमार्गेण प्रयत्नः तु करणीयः एव'' इति अस्ति तस्य आशयः ।





# अदृष्टकारकः रोगः

सुरपुरे शतक्रतुः नामकः कश्चित् वैद्यः आसीत् । सः 'द्वितीयधन्वन्तरिः' इति प्रसिद्धः आसीत् । रोगः यः कोऽपि वा भवतु, तस्य उपशमने सः सिद्धहस्तः आसीत् । बहुकालपर्यन्तं सः अपुत्रः आसीत् । अनन्तरं तस्य दशक्रतुः नाम पुत्रः सञ्जातः । अतः सः मातापित्रोः लालनपात्रतां गतः आसीत् । प्रौढत्वं प्राप्तवान् सः यथा महाबुद्धिमान् जातः, तथैव अनुक्तग्राही अपि जातः । बाल्ये तस्य परिष्कारः न कृतः आसीत् इति कारणतः सः तारुण्ये मातापित्रोः वचन-परिपालकः न जातः ।

दशक्रतोः दुरभ्यासाः यद्यपि न आसन्, तथापि सः गुणशाली तु न आसीत् । यथा रोचते तथा कार्यं करोति स्म सः । बहुधा उक्तः चेत् अपि सः पितुः सकाशात् वैद्यविद्यां न अभ्यस्तवान् । अन्येषाम् उपहासः, कृतस्य दोषस्य अनङ्गीकारः, ज्येष्ठानां विषये अश्रद्धा इत्यादयः तस्य स्वभावाः आसन् ।

तं बहुधा उपदिश्य अपि किमपि फलम् अप्राप्तवान् तस्य पिता कदाचित् तम् उद्दिश्य – ''उत्तमजनानाम् आरोग्यमपि उत्तमं भवति । भवान् स्वपरिष्कारं यदि न करिष्यति तर्हि केनचित् अपरिहार्यरोगेण पीडितः भविष्यति'' इति बोधितवान् ।

दशक्रतुः पितुः वचनम् उपेक्षितवान् । ततः मासानन्तरं कदाचित् प्रातःकाले उत्थाय दशक्रतुः स्वशरीरं दृष्टवान् । आशरीरं रक्त-श्वेत-कालकानि दृश्यन्ते स्म । शतक्रतुः तस्य शरीरं दृष्ट्वा खिन्नः सन् किञ्चित् औषधं दत्तवान् । तेन औषधेन दशक्रतोः मुखे हस्तपादयोः च उत्पन्नानि कालकानि अदृश्यतां गतानि । परन्तु बहूनि दिनानि अतीतानि चेत् अपि उदरे पृष्ठे

च स्थितानि कालकानि न अपगतानि । तानि यथा न दृश्येरन् तथा सर्वदा युतकं धृत्वा एव अटति स्म दशक्रतुः ।

"विधेयतां विनयं च अभ्यस्य दुःखं त्यजतु । ज्येष्ठेषु गौरवं प्रदर्शयतु । कोपस्य निग्रहं करोतु । ततः भवान् रोगमुक्तः भविष्यति" इति उक्तवान् शतक्रतुः ।

दशक्रतोः तस्मिन् वचने विश्वासः न उत्पन्नः । 'वस्तुतः पिता एव रोगागमनस्य कारणम् । मदीये आहारे किञ्चित् औषधं योजयित्वा दत्तवान् स्यात् सः' इति चिन्तितवान् दशक्रतुः । एतं सन्देहं मातरम् उक्तवान् सः । सा पतिम् एतत् उक्तवती ।

तत् श्रुत्वा खिन्नः शतक्रतुः - "अहं मम शत्रोः रोगपरिहारार्थम् अपि उत्तमम् औषधम् एव दास्यामि । शत्रवे अपि रोगजनकम् औषधं कदापि न दास्यामि" इति उक्तवान् ।

परन्तु दशक्रतोः मनसि तु पितुः विषये सन्देहः आसीत् एव । कानिचन दिनानि अतीतानि । कदाचित् शतक्रतोः समीपं कश्चित् रोगी आगतवान् । दशक्रतुः येन रोगेण पीडितः आसीत् तेन एव रोगेण पीडितः आसीत् सः अपि । शतक्रतुः तस्मै औषधं दत्त्वा - "ज्येष्ठेषु गौरवं भवतु । कनिष्ठेषु दया भवतु । कोपस्य, दुःखस्य च निग्रहं करोतु । तेन अचिरात् एव भवान् रोगमुक्तः भविष्यति" इति उक्तवान् ।

सप्ताहाभ्यन्तरे एव सः रोगी सम्पूर्णतया रोगमुक्तः जातः । एतत् अवलोकितवान् दशक्रतुः पितुः समीपम् आगत्य रूक्षस्वरेण उक्तवान् - "सः रोगी सप्ताहाभ्यन्तरे एव



रोगमुक्तः जातः । भवान् उद्देशपूर्वकं मह्यम् उत्तममौषधं न दत्तवान् । तस्मै यत् औषधं दत्तवान् तत् एव मह्यम् अपि ददातु । अन्यथा मयि भवतः प्रीतिः नास्ति एव इति भावयामि" इति उक्तवान् ।

तदा शतक्रतुः हसन् - "यादृशम् औषधं तस्मै दत्तं तादृशम् एव दत्तम् अस्ति भवते अपि । तथापि सन्देहः भवन्तं बाधते । तस्य निवारणार्थम् एकः एव मार्गः स्वयं वैद्यशास्त्रस्य अध्ययनम् । तथा कृतं चेत् भवान् सत्यं स्वयं ज्ञातुं शक्ष्यति" इति उक्तवान् ।

"वैद्यशास्त्रस्य अध्ययने मम आसक्तिः नास्ति । यस्य पठनात् मम रोगस्य चिचित्साक्रमः ज्ञातुं शक्यः तत् पुस्तकं मह्यं ददातु । तत् पठित्वा चिकित्साक्रमं



ज्ञास्यामि'' इति उक्तवान् दशक्रतुः ।

''वैद्यशास्त्रे मनुष्य-शरीरतत्त्वविषये विवरणानि सन्ति । अस्माकम् आहार-विषये, विविधमूलानां विषये, तेषां गुणावगुणानां विषये च वर्णितम् अस्ति । एतत् सर्वं ज्ञात्वा वैद्येन चिकित्साक्रमः निर्णेतव्यः भवति । अमुक-रोगस्य कृते अमुकम् औषधम् इति वैद्यशास्त्रे कुत्रापि उक्तं न भवति । वैद्यः अनुभवबलात् कस्मै किम् औषधं दातव्यम् इति निर्णयति । वैद्यः भवितुं वैद्यशास्त्रस्य अध्ययनम् अनिवार्यम्'' इति उक्तवान् शतक्रतुः ।

एतत् श्रुतवतः दशक्रतोः मनसि रोषः उत्पन्नः । 'पिता असमीचीनम् एव औषधं मह्यं दत्तवान् इत्येतत् प्रमाणीकरणीयम् । मदीयरोगस्य उपशमनं मया एव साधनीयम्' इति निश्चितवान् सः। ततः आरभ्य सः स्वयम् एव वैद्यकीयग्रन्थान् पठितुम् उद्युक्तः अभवत् ।

एतत् ज्ञातवान् शतक्रतुः तम् उद्दिश्य - ''वत्स ! स्वयं पठित्वा ज्ञातुम् अधिककालः आवश्यकः । स्वाध्यायात् सर्वम् अवगन्तुं न शक्यते अपि । अतः एव प्राज्ञाः वदन्ति - सर्वविधाः अपि विद्याः गुरुमुखात् एव ज्ञातव्याः इति । पितुः ऋते श्रेष्ठः गुरुः नास्ति इति स्मरतु'' इति उक्तवान् ।

'शीघ्रं वैद्यशास्त्रं ज्ञातव्यम्' इति प्रबला इच्छा आसीत् खलु दशक्रतोः ? अतः सः पितुः प्रस्तावं विना विरोधम् अङ्गीकृतवान् । स्वयं तु सः बुद्धिमान् आसीत् एव । शतक्रतुः समर्थः वैद्यः, उत्तमबोधकः च आसीत् । अतः वर्षाभ्यन्तरे एव दशक्रतुः वैद्यशास्त्रस्य सर्वान् सूक्ष्मान् विषयान् ज्ञातवान् ।

स्वरोगार्थं योग्यम् औषधम् अपि ज्ञातवान् दशक्रतुः । तस्य सज्जीकरणार्थं मूलद्वयस्य आवश्यकता आसीत् । ''तादृशानि मूलानि मम गृहे न सन्ति । समीपवनात् तानि आनेतव्यानि'' इति उक्तवान् शतक्रतुः ।

स्वरोगस्य निवारणं स्वयं करणीयम् इति चिन्तयन् दशक्रतुः समीपस्थं वनं गतवान् । बहुधा अटनानन्तरम् एकत्र आवश्यक-मूलानि तेन दृष्टानि । यावत् तानि छेत्तुं सः उद्युक्तः तावता कश्चित् बाणः आगत्य तस्य पार्श्वे पतितः । बाणस्य अल्पस्पर्शात् तस्य दक्षिणहस्तस्थं चर्म किञ्चित् अपगतम् आसीत् । विशेषः व्रणः तु न जातः ।

दशक्रतुः कोपेन - ''कः सः दुष्टः मदान्धः नराधमः मां लक्ष्यीकृत्य बाणं क्षिप्तवान् ?'' इति स्वगतम् उच्चस्वरेण उक्त्वा झटिति पृष्ठतः दृष्टवान् ।

तदा तेन तत्र देशस्य राजा दृष्टः । राजा मृगयार्थम् आगतः आसीत् । कश्चित् पशुं लक्ष्यीकृत्य प्रयुक्तः बाणः अकस्मात् एतस्य समीपम् आगतः आसीत् । राजा दशक्रतुं पश्यन् हसन् उक्तवान् - ''अहम् उद्देशपूर्वकं भवन्तं लक्ष्यीकृत्य बाणं न प्रयुक्तवान् । भवान् अपि उद्देशपूर्वकं मां न निन्दितवान् । मम दोषम् अहम् अङ्गीकरोमि । अज्ञात्वा एतस्य देशस्य राजानं भवान् निन्दितवान् । तं दोषं भवान् अपि अङ्गीकरोतु । तदा सर्वं सम्यक् भविष्यति'' इति उक्तवान् ।

परन्तु दशक्रतुः - ''बाणप्रयोगः दोषाय । अतः भवान् अङ्गीकृतवान् । बाणेन अहं स्पृष्टः इति कारणतः अहं भवन्तं निन्दितवान् । तत्र मम दोषः कोऽपि नास्ति '' इति रूक्षतया उक्तवान् ।

''अहम् एतस्य देशस्य राजा । प्रथमं गौरवदानम् अभ्यस्यतु भवान्'' इति उक्तवान् राजा ।

तथापि दशक्रतुः शान्तः न जातः । ''यदि सामान्येन दोषः क्रियते तर्हि तस्य एकस्य क्लेशः भविष्यति । राजा दोषं करोति चेत् देशस्य एव क्लेशः भविष्यति । यः राजा दोषं करोति सः गौरवार्हः न । अहं मम दोषं न अङ्गीकरोमि'' इति रूक्षस्वरेण एव उक्तवान् सः ।

तेन राजा कुपितः । सः द्वित्रवारं करताडनं कृतवान् । तत् श्रुत्वा दश भटाः तत्र उपस्थिताः अभवन् । राजा तान् उद्दिश्य - ''यः दोषम् अङ्गीकृतवान् तम् अपि एषः निन्दति । राजा गौरवेण द्रष्टव्यः



इत्यपि एषः न जानाति । अतः शतकशाताडनैः एषः दण्ड्यताम्'' इति उक्तवान् ।

तावता एव भटाः दशक्रतुम् आकृष्य गृहीतवन्तः । कश्चित् भटः कशां गृहीतवान् । परिस्थितेः गम्भीरतां ज्ञातवतः दशक्रतोः मनसि महत् भयम् उत्पन्नम् ।

सः कम्पमानः सन् - ''महाप्रभो ! अहं प्रसिद्धस्य वैद्यस्य शतक्रतोः पुत्रः । अनारोग्येण पीडितः सन् कष्टेन मूलान्वेषणं कुर्वन् अत्र आगतवान् अस्मि । अनारोग्यस्य कारणेन एव दुःखं कोपः च मम अधिकः जातः । अतः एव अयोग्यवचनानि उक्तवान् अस्मि । कृपया अहं क्षन्तव्यः'' इति उक्तवान् ।

राजा अनङ्गीकारपूर्वकं शिरः चालयन् - ''कशां दृष्ट्वा एव भवति परिवर्तनं जातम् । यदि ताडनं प्राप्स्यते तर्हि तत् परिवर्तनं चिरकालं स्थास्यति । अतः ताडनं प्राप्नोतु'' इति उक्तवान् ।

कश्चन भटः ताडयितुं दशक्रतोः युतकं निष्कासितवान् । तस्य शरीरं दृष्ट्वा राजा तस्य भटाः च दिग्भ्रान्ताः जाताः । तस्य शरीरं विविधवर्णकालकैः युक्तं सत् जुगुप्साजनकम् आसीत् ।

''एषः रोगपीडितः इति तु सत्यम् एव । अतः त्यजन्तु एतम्'' इति भटान् उक्तवान् राजा ।

'अहो, रक्षितः अहम्' इति स्वगतं वदन् वस्त्राणि धृत्वा मूलानि स्वीकृत्य गृहम् आगत्य दशक्रतुः पितरं प्रवृत्तं सर्वम् उक्त्वा - ''यद्यपि भवता पूर्वं बहुधा बोधितम् आसीत्, तथापि अहं न ज्ञातवान् आसं यत् वचनस्य अनियन्त्रणम् आपत्करम् इति । अद्य अहं स्वानुभवात् तत् ज्ञातवान् । अन्यच्च यदि अहं चर्मरोगेण पीडितः न स्यां तर्हि अद्य चूर्णीकृतः अभविष्यम्'' इति उक्तवान् ।

''एतस्य रोगस्य कारणात् एव भवान् वैद्यशास्त्रम् अभ्यस्तवान् । रोगकारणात् एव भवान् कशाताडनात् मुक्तिम् अपि प्राप्तवान् । कोपः, जिह्वायाः अनियन्त्रणं च आपत्कारकम् इत्यपि भवान् अवगतवान् अस्ति । अतः रोगः उपकारकः एव जातः भवद्विषये'' इति उक्त्वा शतक्रतुः पुत्राय योग्यम् औषधं दत्त्वा तं रोगमुक्तं कृतवान् अचिरात् एव ।





# सुखिनः सर्वे

सुभद्रा-शेखरयोः एकमात्रपुत्री आसीत् ऊर्मिला । एका एव पुत्री इति कारणेन अत्यन्तं प्रीत्या एव तां पालितवन्तौ तौ । ऊर्मिला अपि मातापितरौ विहाय कदापि न तिष्ठति स्म । यदा ऊर्मिला प्राप्तवयस्का अभवत् तदा शेखरः वरान्वेषणम् आरब्धवान् । जामाता स्वगृहे एव वसेत् इति सुभद्रायाः तु अपेक्षा । यद्यपि शेखरः अपि तथैव इच्छति स्म, तथापि तेन अन्विष्टेषु वरेषु कोऽपि श्वशुरगृहे वासं कर्तुं न इष्टवान् ।

अन्ते सुभद्रा-शेखरौ निर्णीतवन्तौ यत् पुत्रीं पतिगृहम् एव प्रेषयिष्यामः इति । ततः पार्श्वग्रामस्थः राजेशः नाम युवकः ऊर्मिलायाः परिणयम् अङ्गीकृतवान् । गृहद्वयस्यापि ज्येष्ठाः मिलित्वा सम्भाषणं कृतवन्तः । ऊर्मिलाराजेशयोः विवाहः वैभवेन सम्पन्नः च । ऊर्मिला पत्या सह तस्य गृहं गतवती अपि ।

मातृगृहे बहु लालनेन पोषिता इति कारणेन ऊर्मिला पतिगृहे समञ्जनपूर्वकं जीवने कष्टम् अनुभूतवती । पञ्चदशदिनेषु अतीतेषु एव सा ''मातृगृहं गच्छामि'' इति कथनम् आरब्धवती । न केवलं तावत्, 'मया सह आगत्य मम मातृगृहे एव वसतु' इति पतिं सानुरोधं पुनः पुनः उक्तवती च । राजेशः तत् सर्वथा न अङ्गीकृतवान् ।

पतिगृहे वासं कर्तुम् अशक्ता ऊर्मिला एकस्मिन् दिने मातृगृहं प्रत्यागतवती एव । तस्याः आगमनेन सुभद्रा-शेखरौ सन्तुष्टौ । पुत्र्याः पतिगृहगमनेन तौ अपि वियोगदुःखम् अनुभवतः स्म । मातृगृहं प्रति आगमनानन्तरं सप्ताहाभ्यन्तरे 'पतिः द्रष्टव्यः' इति इच्छा अभवत् ऊर्मिलायाः । मातापित्रोः सान्त्वनवचनानि अपि अशृण्वती सा 'पतिगृहं गमिष्यामि एव'

इति दृढस्वरेण उक्तवती ।

या विवाहात् पूर्वम् एकं दिनमपि मातापित्रोः वियोगं न सहते स्म तां ''श्वशुरगृहे एव वसामि'' इति वदन्तीं पुत्रीं दृष्ट्वा सुभद्रा आश्चर्यचकिता अभवत् ।

एकस्मिन् दिने प्रातः एकाकिनी पतिगृहं प्रति प्रस्थितवती एव ऊर्मिला ।

तस्मिन् एव समये तस्याः पतिः राजेशः अपि पत्न्याः विरहम् असहमानः 'ऊर्मिलां द्रष्टुं गन्तव्यम्' इति निश्चितवान् । 'भवान् एव पत्न्याः गृहं गच्छति चेत् गौरवस्य हानिः भविष्यति । अतः मा गच्छतु' इति तस्य मातापितरौ अपि बहु बोधितवन्तौ ।

''भवान् भूस्वामिनः पुत्रः । तादृशः भवान् तत्र पत्न्याः गृहे वासेन अस्माकं वंशस्य प्रतिष्ठां धूलिसात् करोति किम् ?'' इति कोपेन पृष्टवान् राजेशस्य पिता ।

''अहं किमपि वक्तुं न इच्छामि तद्विषये । किन्तु अहं गच्छामि एव'' इति उक्त्वा राजेशः गृहात् प्रस्थितवान् एव ।

मार्गे ऊर्मिला-राजेशौ परस्परं मिलितवन्तौ । अकस्मात् परस्परं दृष्ट्वा तौ सन्तोषेण मूकौ जातौ ।

ऊर्मिला कथमपि समस्थितिं प्राप्य प्रथमं पतिम् उक्तवती - ''अहं भवतः गृहे उषितुं न इच्छामि । पत्न्याः गृहे वासं लज्जास्पदं मन्यते भवान् । अतः इदानीं किं करवाम ?'' इति ।

राजेशः किञ्चित् चिन्तयित्वा उक्तवान् - ''अन्ते अवशिष्टः तु एकः एव मार्गः । उभयोः गृहे अपि वासः मास्तु । पृथक् गृहं निर्माय आवां स्वकीये गृहे एव वसाव । तदा तदा गृहद्वयमपि गत्वा तैः मिलित्वा आगच्छाव । विवादेन विना सुखेन जीवनमेव प्रधानम्'' इति ।

ऊर्मिला सन्तोषेण अङ्गीकृतवती ।

प्रवृत्तं सर्वं ज्ञात्वा राजेशस्य पिता पत्नीम् - ''पश्यतु, मम पुत्रः वंशस्य गौरवं रक्षितवान् । पत्न्याः गृहे तु वासं न कृतवान् । यतः सः मम एव पुत्रः खलु ?'' इति अभिमानेन उक्तवान् ।

''मम पुत्री श्वशुरगृहं न गतवती । जामातरमेव स्वमार्गे आनीतवती अस्ति । सा मम पुत्री खलु ?'' इति सानन्दम् उक्तवती सुभद्रा ।

एवं सर्वं शुभकरम् अभवत् ।





# सम्राट् अशोकः

## ७

*(तक्षशिलायाः विद्रोहं शमयित्वा आगच्छन्तम् अशोकं मारयितुं सुषेणेन कृतः प्रयत्नः विफलः जातः । ज्येष्ठपुत्रस्य एतादृशं दुर्व्यवहारं दृष्ट्वा राजा दिग्भ्रान्तः । राजकुमारयोः अन्यतमः उज्जयिनीं प्रति प्रेषणीयः इति सः निर्णीतवान् । राजधानीतः पाटलीपुत्रतः अन्यत्र गन्तुं सुषेणः न इष्टवान् इति कारणेन राजा अशोकम् आहूतवान् । तदनन्तरम् .....)*

स्वसमीपम् आगत्य नमस्कृतवन्तम् अशोकम् 'उपविशतु' इति संज्ञया सूचयित्वा राजा बिन्दुसारः शय्यायाः उत्थाय उपविश्य - "अयि अशोक ! युद्धे जयप्राप्तिः यथा, तथैव अव्यवस्थितस्य शासनव्यवहारस्य समीकरणम् अपि प्रधानम् । भवन्तौ द्वौ अपि कुमारौ मम नेत्रीभूतौ स्तः । प्रथमं कार्यं भवान् यशस्वितया निरूढवान् अस्ति । अपरस्मिन् कार्ये अपि भवतः सामर्थ्यस्य परीक्षां कर्तुम् इच्छामः" इति उक्तवान् ।

तदा अशोकः विनम्रतया उक्तवान् - "आर्य ! मया किं करणीयमिति आज्ञाप्यताम्" इति ।

"समृद्धायाः अवन्त्याः राजधानी उज्जयिनी । सर्वदृष्ट्या अपि तक्षशिलातः अपि सा श्रेष्ठा । तत्रत्यः अस्माकं राजप्रतिनिधिः अकस्मात् दिवं गतः अस्ति ।



भवान् तत्र गत्वा शासनं कर्तुं शक्नोति किम् ?'' इति पृष्टवान् राजा ।

''पितुः इच्छापूरणं महासौभाग्याय मन्ये अहम्'' इति उक्तवान् अशोकः अविचलस्वरेण ।

''महान् प्रमोदः सञ्जातः । योग्यः व्यवहारः भवतः । क्षिप्रानद्याः तीरे स्थितायां तस्यां नगर्याम् अस्माकम् अधिकारिणः अधुनापि बहवः सन्ति । यदि भवान् इच्छति तर्हि विश्वासार्हान् अधिकारिणः पाटलीपुत्रतः नेतुम् अपि अर्हति । भवान् शीघ्रमेव उज्जयिनीं प्रति प्रतिष्ठताम्'' इति उक्तवान् राजा ।

''यथा प्रभोः आज्ञा'' इति उक्त्वा पितरं नमस्कृत्य ततः साक्षात् मातुः समीपं गतवान् अशोकः । पितुः आदेशस्य विषयं मातरं निवेद्य - ''अहम् उज्जयिनीं गमिष्यामि । आशिषा माम् अनुगृह्णातु'' इति उक्त्वा तां नमस्कृतवान् ।

तदीयं वचनं श्रुत्वा तस्य माता सुभद्रा आश्चर्यचकिता, दुःखिता च भूत्वा - ''रे पुत्र, भवतः दर्शनेनैव मम दुःखम् अपगच्छति इति कारणेनैव 'अशोकः' इति भवतः नाम कृतवती आसम् । भवतः दर्शनेन विना अहं कथं जीवामि ? अथवा ...., भवतः दूरगमनम् एकया दृष्ट्या उत्तममेव । तथापि भवान् यावत् सकुशलं न प्रत्यागमिष्यति तावत् चिन्ता तु भविष्यति एव । भवतु नाम, जागरूकतया गत्वा आगच्छतु वत्स !'' इति वदन्ती नमस्कृतवन्तं तम् उन्नीतवती अश्रूणि स्रावयन्ती ।

''अम्ब ! विना कारणं भीतिः न युक्ता । अलम् आतङ्केन । मम दूरगमनं युक्तमेव इति उक्तवती खलु भवती ? तत् किमर्थम् ?'' इति पृच्छन् अशोकः मातुः पार्श्वे उपविष्टवान् ।

''दूरे विद्यमानायाम् उज्जयिन्यां भवान् सुरक्षितः सुखी च भवेत् इति काचित् निरीक्षा मम । अत्र भवतः प्रबलाः शत्रवः सन्ति इति मम अन्तरङ्गं वदति । एषा मम कल्पना एव स्यात् कदाचित् । क्वचित् अन्यत् अपि भासते यत् दुष्टाः तत्रापि न आगमिष्यन्ति इति कथं वक्तुं शक्यते इति । यथाकथञ्चित् स्यात् नाम, भवान् तु आत्मरक्षणविषये सर्वदा जागरूकः तिष्ठतु । मम आशीर्वादाः सदा भवति भविष्यन्ति एव'' इति हस्यद्वयमपि

अशोकस्य शिरसि स्थापयन्ती उक्तवती माता सुभद्रा ।

एकस्मिन् शुभदिने उषःकाले अशोकः सहस्रेण अङ्गरक्षकैः सह उज्जयिनीं प्रति प्रस्थितवान् । अपराह्णे ते विदिशायाः कस्यचित् पर्वतस्य उपत्यकायां विद्यमानं कञ्चित् ग्रामं प्राप्तवन्तः । लघुभिः पर्वतैः आवृतः सः कश्चित् अल्पः ग्रामः । ग्रामे अनेके देवालयाः बौद्धमन्दिराणि च आसन् । तस्मिन् ग्रामे बुद्धवंशजाः सत्पुरुषाः शाक्याः केचन बहोः कालतः वसन्ति स्म ।



विदिशायाः शाक्यनायकः अशोकम् आदरेण स्वागतीकृत्य तस्य आतिथ्यार्थं सर्वाः व्यवस्थाः कृतवान् । परम् अशोकः - ''ग्रामतः बहिः स्थिते प्रदेशे एव वसतिः भवतु मम'' इति सूचितवान् । तस्य आज्ञानुगुणं भटाः पर्वतस्य उपरि समतलप्रदेशे वस्त्रेण वसतिं निर्मितवन्तः । रात्रौ भोजनं कृत्वा तत्रैव निश्चिन्ततया शयनं कृतवान् अशोकः ।

प्रभाते अरुणोदयसमये सः जागरितः अभवत् । सः उत्थाय बहिः आगतवान् । परितः स्थितः परिसरः तु धूमेन इव तुषारेण आवृतः आसीत् । तस्मिन् प्रशान्ते मनोहरे पर्वतखातप्रदेशे विहर्तुम् इच्छन् अशोकः अङ्गरक्षकान् निवार्य एकाकितया मन्दं गतवान् प्रकृतिसौन्दर्यम् आस्वादयन् । पक्षिणां कलरवं विहाय तत्र न कोऽपि अन्यः शब्दः आसीत् । उदयपर्वते सूर्यः तदा एव उदयमानः आसीत् । तुषारसमूहं विदीर्य आगच्छतां सूर्यकिरणानां सौन्दर्यम् अत्यन्तं मनोहरम् आसीत् । शीतले वायौ एकत्र स्थित्वा मनोहराणि दृश्यानि पश्यन् अशोकः अग्रे गमनाय पादम् उन्नीतवान् । तावता - ''तिष्ठतु, तिष्ठतु'' इति कश्चन स्वरः श्रुतः । तं श्रुत्वा अशोकः 'कस्याः एषः मधुरध्वनिः ?' इति ज्ञातुम् इच्छन् परिवृत्य दृष्टवान् ।

अनतिदूरे काचित् सुन्दरी युवतिः तेन दृष्टा । तुषाराणाम् आवरणात् सद्यः एव आकाशात् अवतीर्णा काचित् देवता इव सा तेन दृष्टा ।

''अवरोधार्थं क्षम्यताम् । अग्रे एकः महान् खातः अस्ति'' इति उक्तवती सा युवतिः ।

तावति काले तुषारः किञ्चिदिव अपगतः आसीत् इति कारणेन सर्वं स्पष्टतया दृश्यते

स्म । अशोकः पुरतः दृष्टवान् । तत्र महान् खातः दृश्यते स्म । खातस्य उत्सङ्गे स्थितवन्तम् आत्मानं ज्ञात्वा सः दिग्भ्रान्तः । एकं पदं यदि सः अग्रे स्थापितवान् स्यात् तर्हि खाते अपतिष्यत्, कण्टकमये खाते मृतः अपि अभविष्यत् ।

अशोकः परिवृत्य पुनः तां युवतिं दृष्टवान् । सा शिरः अवनमय्य – "भवतः एकान्तस्य भङ्गः कृतः यत् तदर्थम् अहं क्षन्तव्या युवराज" इति उक्तवती ।

"भवत्याः क्षमायाचनं किमर्थम् ? यदि भवती मां न अजागरयिष्यत् तर्हि अहम् इदानीम् सजीवः न अभविष्यम्" इति उक्तवान् अशोकः ।

"अहं भवन्तं न रक्षितवती । शाक्यमुनेः बुद्धस्य अनुग्रहेण भवान् रक्षितः" इति उक्तवती सा युवतिः ।

"भवती का ? असमये अत्र किं कुर्वती अस्ति ?" इति पृष्टवान् अशोकः ।

"अस्य राज्यस्य नाम एव मम नाम अपि – विदिशा इति । अत्रत्यः शाक्यराजः एव मम पिता । समीपे एव गुहायां विद्यमानस्य वृद्धसंन्यासिनः परिचर्यां कृत्वा प्रतिगच्छन्ती अस्मि" इति उक्तवती सा युवतिः ।

विदिशायाः वाक्शैली, रूपं च अशोकाय बहु अरोचत । तस्याः सरलं, सुन्दरं च मुखं मुग्धं मनोहारि आकर्षकं च आसीत् ।

"युवराज्ञि ! विदिशे ! भवत्यै कथं कृतज्ञताः समर्पणीयाः इति अहं न जानामि" इति उक्तवान् अशोकः ।

"अहं न युवराज्ञी, युवराज !" इति



उक्तवती विदिशा ।

"आं, भवती न युवराज्ञी, अपि तु ततोऽपि श्रेष्ठा । भवती मम प्राणरक्षिका देवता एव" इति उक्तवान् अशोकः ।

"युवराजवर्य ! अहं भवतः प्राणान् न रक्षितवती । अहं शाक्यमुनेः बुद्धस्य भक्तस्य सेवां कृत्वा प्रत्यागच्छन्ती आसम् । अतः बुद्धस्य अनुग्रहेणैव भवान् रक्षितः । अत्र मम प्रयत्नः कोऽपि नास्ति" इति उक्त्वा ततः गतवती विदिशा ।

अशोकस्य मनः पुनश्च अन्तर्लीनम् अभवत् । 'अयं प्रपञ्चः कियान् विशालः अस्ति ! अत्र अनन्तानि सुन्दरदृश्यानि सन्ति । अद्य कीदृशीं करुणां दृष्टवान् अहम् ! अद्यपर्यन्तम् अपि अहं राजभवने द्वेषासूयवैरत्वादीनां मध्ये एव जीवनं



यापितवान् । तद् विहाय अन्यत् किं वा आसीत् मम जीवने' इति चिन्तयन् सः किञ्चित् अटित्वा स्ववसतिं प्रत्यागतवान् । 'आदिनम् अत्रैव विश्रान्तिः स्वीकरणीया, श्वः एव उज्जयिनीं प्रति प्रस्थानम्' इति निश्चित्य सः अङ्गरक्षकान् उद्दिश्य - ''इतःपरं श्वः सूर्योदयानन्तरम् एव अस्माकं प्रयाणस्य आरम्भः । अतः मम एकान्ततायाः भङ्गः ग्रामजनानां क्लेशः च यथा न स्यात् तथा भवन्तः स्वेच्छया कालं यापयितुम् अर्हन्ति'' इति उक्तवान् ।

पश्चात् अशोकः क्षिप्रानद्यां स्नात्वा पर्वतस्य उपरि, खाते च स्वेच्छया विहारं कृतवान् ।

आदिनम् अङ्गरक्षकाः तस्य समीपं न आगतवन्तः एव । ते ग्रामे तिस्त्रः नर्तकीः दृष्टवन्तः । सुन्दरीभिः ताभिः सह केचन वादकाः अपि आसन् । ताः नवरसाभिव्यञ्जकगानेन, नृत्येन च सैनिकान् तोषितवत्यः । अन्ते सैनिकाः - ''अद्य रात्रौ अस्माकं वसतिं भोजनार्थम् आगच्छन्तु'' इति ताः अनुरोधपूर्वकम् उक्तवन्तः ।

सैनिकानां वचनं श्रुत्वा ताः सहर्षम् उक्तवत्यः - ''तत् अस्माकं परमं सौभाग्यम् । निश्चयेन वयं तत्र आगमिष्यामः । यदि भवन्तः इच्छन्ति तर्हि पाककार्ये वयं साहाय्यं करिष्यामः अपि'' इति ।

सैनिकाः 'अस्तु' इति अङ्गीकृतवन्तः । तस्मिन् सायङ्काले शाक्यराजः अशोकसमीपम् आगत्य - ''कृपया अद्य रात्रौ मम गृहं भोजनार्थम् आगच्छतु'' इति आमन्त्रितवान् । तदा अशोकः - 'कदापि अपरिचितैः दीयमानः आहारः न सेवनीयः एव' इति प्रधानमन्त्रिणा, सेनाधिपतिना च दत्तां सूचनां यद्यपि स्मृतवान्, तथापि अपरिचिते अपि सज्जने शाक्यराजे विश्वस्य तस्य आमन्त्रणम् अङ्गीकृतवान् । तत्र गमनेन विदिशायाः दर्शनमपि भविष्यति इति सः चिन्तितवान् ।

तस्यां रात्रौ महाराजस्य परिवारस्य जनाः षड्रसोपेतेन भूरिभोजनेन अशोकं तोषितवन्तः । सर्वं पाकं विदिशा तस्याः माता च सज्जीकृतवत्यौ आस्ताम् । दीपस्य मन्दप्रकाशे विदिशायाः प्रशान्तं मुखं दृष्ट्वा अशोकः बहु सन्तुष्टः ।

भोजनसमाप्तिसमये आकाशः मेघावृतः आसीत् इति कारणेन शाक्यराजः तस्य

सहकारिणः च स्वयं दीपं गृहीत्वा मार्गदर्शनं कुर्वन्तः अशोकं तस्य वसतिं प्रापय्य गतवन्तः ।

अशोकस्य आगमनस्य किञ्चित् समयानन्तरं लघुप्रमाणेन वृष्टिः आरब्धा । अर्धरात्रसमयः । अशोकः गाढनिद्रायाम् आसीत् । तदा अकस्मात् ''अब्रह्मण्यम्'' इति उच्चैः कस्याश्चित् स्त्रियाः ध्वनिं श्रुत्वा सः जागरितः अभवत् । वसतेः अन्तः कृष्णवेषधारिणौ उभौ तेन दृष्टौ । तयोः अन्यतरः हस्तेन प्रकाशमानं खड्गं प्रहर्तुम् उन्नीतवान् आसीत् ।

अनुक्षणम् अशोकः शय्यातः उत्प्लुत्य शय्यायाः अधः स्थितं स्वस्य खड्गम् आकृष्य तौ ग्रहीतुं प्रयत्नं कृतवान् । तावति काले तौ उभौ अपि वसतेः बहिः आगत्य पलायितवन्तौ ।

अङ्गरक्षकान् आह्वयन् अशोकः तौ अनुसृतवान् । किन्तु तस्मात् पूर्वमेव तत् व्यक्तिद्वयमपि अनुसृत्य गच्छन्तम् अन्यं कञ्चित् जनं सः दृष्टवान् । अशोकः वेगेन गत्वा एकां व्यक्तिं पातितवान् । तावति काले अनुसरन् आगतः सः जनः अन्यां व्यक्तिं गृहीतवान् । गृहीते ते द्वे अपि महिले एव ।

तावति काले केचन रक्षकाः धावन्तः तत्र आगतवन्तः । तदा मेघाः आकाशे न आसन् । चन्द्रिकायाः निर्मलः प्रकाशः तत्र सर्वत्र प्रसृतः आसीत् । रक्षकाः ते द्वे महिले दृष्ट्वा नितराम् आश्चर्यचकिताः । याः तिस्रः पूर्वदिने तान् नृत्येन गीतेन च तोषितवत्यः आसन् तासु अन्यतमे आस्ताम् एते ।



युवराजम् अशोकं मारयितुम् एव ते उभे आगते आस्ताम् ।

'मध्यरात्रे मां कः जागरितवान् ?' इति चिन्तयन् अशोकः तं जनं सूक्ष्मतया दृष्टवान्, यश्च तस्य गमनात् पूर्वमेव अपराधिनम् अनुसृतवान् आसीत् । सः जनः न अन्यः, अपि तु विदिशा एव आसीत् । अशोकस्य मुखे आश्चर्यभावं पश्यन्ती विदिशा - ''ह्यः भवतः सैनिकान् तोषयन्तीः नर्तकीः दृष्ट्वा मम मनसि संशयः उत्पन्नः । ताः सामान्याः नर्तक्यः इव न आसन् । तासां चातुर्यम्, अत्यधिक-जागरूकतायुक्तः व्यवहारः च मयि सन्देहम् अजनयत् । रात्रौ वृद्धसंन्यासिनः परिचर्यां कृत्वा प्रत्यागमनसमये भवतः वसतिसमीपम् अन्यैः कैश्चित् जनैः सह

आगच्छन्त्यौ एते अहं दृष्टवती । तदा यदि अहं विरोधम् अकरिष्यं तर्हि ताः माम् अमारयिष्यन् । अदृष्टवशात् तत्समये मम अनुजः तत्र आगतवान् । अहं तम् अत्रैव तिष्ठतु इति उक्त्वा एतयोः पृष्ठतः गौप्येन आगतवती । तयोः अन्यतमा यदा भवतः वसतेः पुरतः स्थित्वा खड्गं गृहीतवती दृष्टा तदा अहम् 'इतः परं विलम्बेन हानिः भवेत्' इति विचिन्त्य उच्चैः आक्रोशनं कृतवती'' इति उक्तवती ।

''एवं तर्हि द्वितीयवारमपि मम प्राणरक्षिका विदिशा एव'' इति उक्तवान् अशोकः ।

''न । बुद्धस्य अनुग्रहेणैव भवान् रक्षितः इति अहं पुनः अपि भवन्तं निवेदयितुम् इच्छामि'' इति उक्तवती विदिशा ।

अशोकः मौनं शिरः चालितवान् अङ्गीकारं सूचयन् । अपि च आत्मानं मारयितुं प्रयत्नं कृतवत्यौ सूक्ष्मतया दृष्ट्वा स्ववसतिं प्रति प्रस्थितवान् ।

विद्रोहिषु द्वे तु गृहीते । अन्यान् सैनिकाः सर्वत्र अन्विष्टवन्तः । किन्तु बहुधा अन्वेषणेनापि कोऽपि न लब्धः । अत्रान्तरे पर्वतस्य अधः प्रतीक्षमाणः विदिशायाः अनुजः यशः गुल्मानां मध्ये निलीय उपविष्टवन्तं कञ्चित् दृष्टवान् । यशं दृष्ट्वा सः पलायितुम् इच्छन् नदीसमीपं गतवान् । नद्यां तस्य उत्प्लवनात् पूर्वम् एव यशः तं गृहीत्वा बद्धवान् ।

एवं गृहीतं तं पुरुषं, द्वे महिले च बद्ध्वा सैनिकाः अशोकस्य पुरतः आनीतवन्तः । तावति काले शाक्यराजः, अन्ये केचन ज्येष्ठाः च तत्र सम्मिलिताः । नर्तक्यः सैनिकानाम् आहारे निद्राजनकम् औषधं योजितवत्यः आसन् इत्यंशः विचाराणात् प्रकाशितः अभवत् । अतः एव अशोकेन आहूते सत्यपि अङ्गरक्षकाः न आगतवन्तः आसन्, ये च सर्वदा रक्षणे सन्नद्धाः एव भवन्ति स्म ।

एतत् सर्वं श्रुत्वा शाक्यराजः - ''एतेषाम् अपराधः तु अधुना ज्ञातः । परम् एतेषां प्रेषकाः के इति अस्माभिः इतः परं ज्ञातव्यम् अस्ति'' इति उक्तवान् ।

''आम् । अवश्यं ज्ञातव्यः अंशः सः'' इति उक्तवान् यशः ।

- (अनुवर्तते)





# राकोलूकस्य शस्त्रचिकित्सा

छलवान् त्रिविक्रमः स्वपरिश्रमम् अपरित्यजन् पुनरपि वृक्षसमीपं गत्वा वृक्षात् शवम् अवतार्य स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः उक्तवान् - ''हे राजन्, भयजनके अस्मिन् श्मशाने मध्यरात्रे भवान् कस्य साहाय्यार्थम् एतावत् कष्टम् अनुभवन् अस्ति इति न जाने अहम् । भवतः साहाय्यापेक्षी कश्चित् मेधावी, पण्डितः वा स्यात् चेत् भवता बहु जागरूकतया भवितव्यम् । यतः स्वार्थिनः सामान्यजनाः यावत् अपायकराः ततोऽपि अधिकम् अपायकारिणः भवन्ति स्वार्थिनः पण्डिताः, मेधाविनः च । आजन्म मूढः कश्चित् कस्यचित् वेतालस्य अनुग्रहेण मेधावी सन्, अन्ते तस्मै वेतालाय एव द्रुह्यति । तस्य कृतघ्नस्य कथाम् अधुना वदामि । मार्गायासोपशमनार्थं तां कथां

## वेतालकथा



श्रद्धया शृणोतु तावत्'' इति ।

ततः सः कथायाः आरम्भं कृतवान् -

वैशालीदेशे केशवः नाम कश्चित् युवकः आसीत् । बाल्ये एव तस्य मातापितरौ दिवङ्गतौ आस्ताम् । अतः तस्य मातुलः एव तं पोषितवान् आसीत् । केशवः जन्मना एव मन्दबुद्धिः आसीत् । विद्या तस्य बुद्धिं न प्रविष्टवती एव । सर्वे तं 'मूर्ख' इत्येव आह्वयन्ति स्म । तस्य सहपाठिनः सर्वे अध्ययनं समाप्य उत्तमं सर्वकारीयम् उद्योगम् अपि प्राप्तवन्तः आसन् । परं केशवः यथापूर्वं मन्दः एव आसीत् ।

तस्य मातुलः महाधनिकः आसीत् । तस्य पुत्री अत्यन्तं कुरूपा आसीत् । मन्दबुद्धये केशवाय एव पुत्रीं दत्त्वा विवाहं कृतवान् तस्य मातुलः । अल्पे एव काले सः मातुलः दिवं गतः अपि ।

राजसभायां कार्यं करणीयम् इति बहुदिनानाम् इच्छा आसीत् केशवस्य । तदर्थं योग्यतां सम्पादयितुम् अहर्निशं पठति स्म सः । किन्तु किमपि अवगन्तुं तु न शक्नोति स्म । यद्यपि सर्वे तस्य मित्राणि तम् उपहसन्ति स्म, तथापि तस्मिन् महती प्रीतिः आसीत् तेषाम् । यतः सः 'भयं नाम किम्' इत्येव न जानाति स्म । मित्रैः उक्तानि साहसमयानि कष्टकराणि अपि कार्याणि सः निर्भयेन करोति स्म ।

तस्मात् नगरात् अनतिदूरे एकं पुरातनं दुर्गम् आसीत् । तत्र एकं श्मशानमपि आसीत् । श्मशाने पिशाचाः सञ्चरन्ति इति किंवदन्ती सर्वत्र प्रसृता आसीत् । दुर्गं प्रविष्टवन्तः केऽपि न प्रत्यागताः इति कारणेन अधुना तत्र केऽपि न गच्छन्ति स्म । केशवस्य केचन सुहृदः कदाचित् केशवम् उद्दिश्य - ''भवता एकाकिना रात्रिसमये दुर्गं प्रति गन्तव्यम् । तत्र गतम् इत्यस्य प्रमाणीकरणार्थं ततः भवता किञ्चित् वस्तु आनेतव्यम् । एतत् कर्तुं भवान् शक्नोति किम् ?'' इति पृष्टवन्तः ।

'अस्तु' इति अङ्गीकृत्य केशवः धैर्येण एकाकी श्मशानं गतवान् । रात्रौ विचित्रान् शब्दान् शृण्वन् एव दुर्गस्य अन्तः परिभ्रमणं कृतवान् सः । तदा तस्य पादे किञ्चित् कपालं लग्नम् । अभिज्ञानार्थं तदेव स्वीकृत्य ततः सः प्रत्यागतवान् । तत् मित्रेभ्यः दर्शितवान् च ।

कपालं दृष्ट्वा भीताः तस्य सुहृदः - ''कपालं कुत्रापि नद्यां क्षिपतु'' इति तं

बोधितवन्तः । तथापि केशवः तेषाम् उपदेशम् अशृण्वन् कपालम् आनीय स्वगृहस्य अट्टे क्षिप्तवान् ।

तस्यां रात्रौ केशवः गाढनिद्रायां निलीनः आसीत् । तदा केनचित् शब्देन सः जागरितः सन् उत्थाय दृष्टवान् । सः यत्र कपालं स्थापितवान् आसीत् तत्र कश्चन भयङ्करः आकारः स्थितः आसीत् । तस्य शरीरं ताम्रवर्णोपेतं, शिरः, श्मश्रु, नेत्रस्य कनीनिका च श्वेतानि आसन् । नेत्रद्वयमपि अग्निगोलकम् इव आसीत् । केशवः निर्निमेषं तम् आकारमेव दृष्टवान् ।



तदा सः आकारः - ''भवतः धैर्यं साहसं च प्रशंसनीयम् । अतिथिरूपेण मां स्वगृहे भवान् स्थापितवान् अस्ति । अतः यदा भवान् स्मरति तदा अहं प्रत्यक्षः भविष्यामि । तदा आवां विविधविषयान् अधिकृत्य सम्भाषणं करवाव । यदा भवान् मत्तः भयम् अनुभवति तदा एतत् कपालं स्वस्थाने एव नीत्वा क्षिपतु । ततः परम् अहं पुनः भवतः दृष्टिगोचरः न भविष्यामि'' इति ।

केशवः हसन् - ''भयं नाम किम् इत्येव अहं न जानामि । भवतु, भवान् कः ? प्रथमं वदतु'' इति उक्तवान् ।

''अहं राकोलूकः । अहं बहु विद्याः जानामि । मम प्रियविषयः शस्त्रचिकित्सा'' इति उक्तवान् सः आकारः ।

केशवः किमपि वक्तुम् उद्युक्तः । परं सूर्योदयस्य सूचनारूपेण कुक्कुटरवः श्रुतः इति कारणेन राकोलूकः अदृश्यः अभवत् ।

अनन्तरदिने मध्यरात्रे केशवेन यदा स्मृतं तदा राकोलूकः प्रत्यक्षः अभवत् । द्वौ अपि मिलित्वा समीपे विद्यमानं शिथिलं देवीमन्दिरं गत्वा बहुकालं जल्पनं कृतवन्तौ । एवं तदारभ्य केशवः तदा तदा मध्यरात्रे राकोलूकेन सह गत्वा वार्तालापं करोति स्म ।

कानिचन दिनानि अतीतानि । प्रतिदिनं पतिः मध्यरात्रे कुत्रापि गत्वा आगच्छति इति ज्ञातवती तस्य पत्नी संशयेन - ''किमर्थं भवान् गच्छति ?'' इति पृष्टवती । केशवः सत्यमेव उक्तवान् ।

''पिशाचेन सह स्नेहः मास्तु । अग्रे सः किमपि कुर्यात् । कथमपि तस्मात् मुक्तः भवतु'' इति तस्य पत्नी प्रार्थितवती ।

''पिशाचः दुष्टः चेत् एतावति काले एव किमपि अकरिष्यत् । अपि च वयं तम्



इदानीं प्रेषयेम चेत् तेनैव कोपेन कदाचित् अपकुर्यात् सः । अतः एवमेव भवाम'' इति उक्तवान् केशवः ।

केषुचित् एव दिनेषु राकोलूकः ज्ञातवान् यत् 'केशवः मूर्खः' इति । सः केशवस्य पाठनम् आरब्धवान् । परं केशवस्य ग्रहणशक्तिः दुर्बला आसीत् । अतः शीघ्रं विषयग्रहणं न भवति स्म । तत् दृष्ट्वा राकोलूकस्य कोपः आगच्छति स्म ।

कदाचित् चतुरङ्गक्रीडासमये केशवः शीघ्रमेव पराजितः अभवत् । कोपेन राकोलूकः अदृश्यः अभवत् । स्वस्य मूर्खतां निन्दन् केशवः गृहम् आगत्य शयनं कृतवान् । निद्रायां सः महत्या वेदनया जागरितः अभवत् । नेत्रे उन्मील्य दृष्टवान् सः । हस्ते तीक्ष्णां छुरिकां गृहीतवान् राकोलूकः तेन दृष्टः । विद्यमाने मन्द-प्रकाशे छुरिकायां रक्तबिन्दवः अपि तेन दृष्टाः । भयेन केशवः मूर्च्छितः अभवत् ।

किञ्चित्कालानन्तरं जागरणं प्राप्य नेत्रे उद्घाटितवन्तं केशवं राकोलूकः मृदु हसन् - ''भोः केशव ! भयं मास्तु । अहं मत्समानं बुद्धिमन्तम् इच्छामि । अतः इदानीं भवन्तं बुद्धिमन्तं कृतवान् अस्मि । इतः परं भवता सह समययापने मम क्लेशः न भविष्यति'' इति ।

केषुचित् एव दिनेषु केशवस्य सर्वाः विद्याः हृद्गताः अभवन् । तस्य असामान्यां बुद्धिमत्तां दृष्ट्वा सर्वे आश्चर्यचकिताः । राजास्थाने सः उत्तमम् उद्योगम् अपि प्राप्तवान् । पतौ परिवर्तनं यत् दृश्यते तस्य कारणं पिशाचः एव इति केशवस्य पत्नी जानाति स्म । कदाचित् चिन्तामग्नं केशवं दृष्ट्वा राकोलूकः तं कारणं पृष्टवान् ।

''मम यदा बुद्धिः न आसीत् तदा एव मम विवाहः अभवत् । मम पत्नी कुरूपा चेदपि तस्यां मम प्रीतिः अस्ति । तस्याः सुन्दरस्य अङ्गसौष्ठवस्य अनुगुणं रूपम् अपि यदि अभविष्यत् तर्हि मम सन्तोषः अभविष्यत्'' इति दुःखेन उक्तवान् केशवः ।

''अहं भवतः पत्नीं सुन्दरीं करिष्यामि । किन्तु तदर्थं भवता प्रतीक्षा करणीया । वयसः, शरीरवर्णस्य, औन्नत्यस्य च अनुगुणं अनुरूपं मुखं मया अन्वेष्टव्यम्'' इति उक्तवान् राकोलूकः ।

राकोलूकेन उक्तं सम्यक् न ज्ञातं चेदपि स्वस्य अङ्गीकारं दत्तवान् केशवः ।



मासात् अनन्तरं कदाचित् राकोलूकः केशवं निद्रातः उत्थाप्य - ''एकवारं भवतः पत्नीं पश्यतु'' इति उक्तवान् उत्साहेन ।

केशवः झटिति प्रकोष्ठं गत्वा पत्नीं दृष्ट्वा नितराम् आश्चर्यचकितः अभवत् । अप्सराः इव अपूर्वसुन्दरी जाता आसीत् तस्य पत्नी ।

अनन्तरदिने स्वप्रकोष्ठे दर्पणे स्वकीयं मुखं दृष्ट्वा सम्भ्रमेण उच्चैः क्रन्दनं कृतवती केशवस्य पत्नी । ''राकोलूकः एतादृशं रूपं भवत्यै दत्तवान् अस्ति'' इति पत्नीम् उक्तवान् केशवः । तादृशरूपप्राप्त्या केशवस्य पत्नी सन्तुष्टा न अभवत् । पिशाचस्य स्नेहेन भाविनि काले काऽपि विपत्तिः सम्भवेत् इति महती भीतिः आसीत् तस्याः ।

एवं सति कदाचित् केशवः ज्ञातवान् यत् स्वस्य पत्न्याः यत् शिरः अधुना अस्ति तत् प्रतिवेशिराज्यस्य कस्याश्चित् महिलायाः इति । तां कोऽपि मारयित्वा रुण्डरहितां कृतवान् आसीत् । 'तस्याः पतिः पत्न्याः वधकम् अन्विष्यन् यदा कदापि मम नगरम् अपि आगच्छेत्' इति भीतिः प्राप्ता केशवेन ।

तस्यां रात्रौ केशवः - ''प्रवृत्तं सर्वं वदतु'' इति राकोलूकम् अनुरोधपूर्वकम् उक्तवान् ।

''देवानामिव वरं दातुं मम सामर्थ्यं नास्ति । अहं काश्चन रहस्यविद्याः, शस्त्रचिकित्सां च जानामि । तेनैव अहं अन्यस्य कस्यचित् मेधाविनः मस्तिष्कं भवतः शिरसः अन्तः योजितवान् । भवन्तं बुद्धिमन्तं कृतवान् च । तथैव भवतः पत्न्याः शरीरे अपि कस्याश्चित् सुन्दर्याः शिरः योजितवान् अस्मि'' इति उक्तवान् राकोलूकः ।

''अहो ! कीदृशम् अकार्यं कृतवान् भवान् ! भवान् एव तां सुन्दरीं मारितवान् इति इदानीं ज्ञातं मया'' इति उक्तवान् केशवः ।

तत् श्रुतवतः राकोलूकस्य नेत्रे कोपेन रक्ते जाते । सः उच्चस्वरेण - ''भोः केशव ! गतजन्मनः पापानां कारणेन एव अहम् एतत् जन्म प्राप्तवान् अस्मि । तथा सति कथं पापकार्यं कर्तुं मम मनः भवेत् ? पूर्वमेव केनचित् तस्याः सुन्दर्याः शिरः कर्तितम् आसीत् । अहं तत् उपयुक्तवान्, तावदेव'' इति उक्तवान् ।

''तादृशं घोरं कृत्यं पश्यन् अपि किमर्थं



भवान् तं तस्मात् न निवारितवान् ?'' इति पृष्टवान् केशवः कोपेन एव ।

''पूर्वमेव अहम् उक्तवान् अस्मि यत् देवानाम् इव मम शक्तिः नास्ति इति । भूतं भविष्यं च ज्ञातुम् अहं न शक्नोमि । पापकार्येभ्यः मनुष्याणां निवारणं मम कार्यं न'' इति आत्मानः कृत्यं समर्थितवान् राकोलूकः ।

''भवतु नाम । अधुना तस्याः सुन्दर्याः पतिः वधकम् अन्विष्य अत्रापि आगच्छेत् । मम पत्नीं दृष्ट्वा सः राज्ञे निवेदयति चेत् अग्रे मम का गतिः ?'' इति वदन् चिन्तया शिरसः उपरि हस्तौ स्थापयित्वा उपविष्टवान् केशवः ।

''चिन्ता मास्तु । तं भवान् अत्र आनयतु । अहं प्रवृत्तं सर्वं तं वदिष्यामि'' इति उक्तवान् राकोलूकः ।

''भवान् तं वक्तुं सिद्धः स्यात् । किन्तु सः भवतः पुरतः धैर्येण तिष्ठेत् खलु । भवतः वचने सः किं विश्वासं कुर्यात् ? अन्यच्च भवान् राजसभाम् आगत्य सत्यं वक्तुं किं शक्नोति ? भवता उक्ते अपि पिशाचस्य भवतः वचने को वा विश्वसिति ? मम मरणदण्डः निश्चितः एव'' इति वदन् केशवः रोदनम् आरब्धवान् ।

तत् श्रुत्वा राकोलूकः उक्तवान् - ''भोः ! भवतः भयं मास्तु । यदि तथा स्यात् तर्हि मम शस्त्रचिकित्साज्ञानेन अहं भवन्तं जीवयिष्यामि । यस्मिन् दिने सः राज्ञः पुरतः दोषारोपणं करिष्यति तद्दिने रात्रौ एव अहं भवतोः शिरः शस्त्रचिकित्सया परिवर्तयिष्यामि । राज-भटाः तम् अपराधिनं मत्वा तस्य एव बन्धनं करिष्यन्ति, दण्डयिष्यन्ति च । भवतः कोऽपि अपायः न भविष्यति । कथम् अस्ति राकोलूकस्य मम उपायः ?'' इति ।

सर्वं श्रुत्वा महान्तं खेदं प्राप्य अपि आत्मानं संयम्य केशवः मौनेन स्थितवान् । यथापूर्वं तेन सह उत्साहेन एव क्रीडितवान् सः ।

अनन्तरदिने सूर्योदयसमये केशवः तत् कपालं नीत्वा दूरे विद्यमाने श्मशाने भूमौ निखातवान् । पश्चात् तस्याम् एव रात्रौ पत्न्या सह तत् नगरं परित्यज्य दूरे विद्यमानं किञ्चित् नगरं गतवान् च ।

एवं कथां समाप्य वेतालः - ''हे राजन् ! इदानीं भवान् वदतु यत् केशवेन कृतं

युक्तम् उत अयुक्तमिति । राकोलूकः द्विवारं तस्य साहाय्यं कृतवान् । तृतीयवारमपि सः यदि स्वकथनानुसारं साहाय्यम् अकरिष्यत् तर्हि केशवेन नगरं त्यक्तव्यं न अभविष्यत् । अपि च 'राकोलूकेन सह स्नेहः मास्तु' इति केशवस्य पत्नी पूर्वमेव बहुधा उक्तवती आसीत् । तथापि तदा तस्याः वचनम् अश्रुत्वा राकोलूकस्य मैत्रीं सम्पादितवान् केशवः अन्ते पत्न्याः प्रेरणया विना एव राकोलूकं दूरीकृतवान् । 'इतः परं मम राकोलूकस्य साहाय्यस्य आवश्यकता नास्ति' इति केशवः चिन्तितवान् वा ? केशवस्य एतादृशं प्रवर्तनं कृतघ्नतायुक्तम् इति भवान् न चिन्तयति किम् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि भवान् मौनं तिष्ठेत् चेत् भवतः शिरः सहस्रधा छिन्नं भविष्यति'' इति उक्तवान् ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''केशवस्य तादृशप्रवर्तनस्य कारणम् अस्ति एव । राकोलूकः निःस्वार्थभावनया केशवस्य साहाय्यं न कृतवान् । आत्मना सह जल्पितुं क्रीडितुं च समबलम् इच्छन् सः केशवस्य मस्तिष्कं परिवर्तितवान् केशवस्य प्रार्थनया विना अपि । अन्यच्च 'मयि राकोलूकः अन्यस्य मस्तिष्कं योजितवान्' इति विषयम् अज्ञात्वा एव केशवः राकोलूकं पत्न्याः सौन्दर्यं याचितवान् । अनन्तरम् एव सः वस्तुस्थितिं ज्ञातवान् । राकोलूकेन सूचितं समस्यायाः परिहारं श्रुत्वा केशवः अस्वस्थः एव अभवत् । पत्न्याः रूपपरिवर्तनेन जातं क्लेशं प्रत्यक्षं दृष्टवान् सः स्वस्य रूपपरिवर्तनं न इष्टवान् । मनुष्यस्य मुखम् एव प्रधानम् । तस्य दर्शनेनैव व्यक्तिम् अभिजानन्ति सर्वे । सर्वोऽपि स्वयं यथा अस्ति तथैव भवितुम् इच्छति, न तु अन्यः इव । अपि च नूतनं जीवनं कथं भवेत् इति केशवस्य भयम् अपि अभवत् इति कारणेन सः कपालं नीत्वा श्मशाने निखातवान् । अत्र कृतघ्नतायाः अंशः लेशमात्रेण अपि नास्ति'' इति ।

एवं वदता राज्ञा मौनस्य भङ्गः कृतः आसीत् । अतः वेतालः अनुक्षणमेव अदृश्यः सन् ततः निर्गत्य वृक्षम् आरूढवान् ।



# वस्तुस्थितिः

कमलापुरे सीतारामशास्त्री नाम कश्चित् प्रवाचकः आसीत् । सः हरिकथाकथने नितरां निपुणः । सर्वत्र तस्य हरिकथां श्रोतुं सहस्राधिकाः जनाः आगच्छन्ति स्म । तस्य एकमात्रं दोषः नाम किञ्चित् विस्मरणशीलता ।

कदाचित् कैश्चित् भक्तैः तस्य हरिकथाकार्यक्रमः आयोजितः एकत्र । देवालयस्य प्राङ्गणे नूतनतया वेदिका अपि निर्मिता तैः ।

निश्चिते दिने युक्ते समये कार्यक्रमः आरब्धः । सीतारामशास्त्री वेदिकाम् आरुह्य भाषणम् आरब्धवान् - ''अद्य गोकुलाष्टमी । श्रीकृष्णस्य जन्मदिनम् । कृष्णः नाम कृष्णवर्णीयः इत्यर्थः । अन्धकारः अपि कृष्णः एव । अज्ञानरूपम् अन्धकारं दूरीकृतवान् भगवान् श्रीकृष्णः । तस्य जन्म कुत्र अभवत् ? कारागृहे । गभीरतया चिन्तयामः चेत् ज्ञायते यत् इदं शरीरमपि एकं कारागृहमेव । तस्मिन् विद्यमानः आत्मा एव भगवान् श्रीकृष्णः । अतः लोकस्य आत्मज्ञानबोधकं पर्व अस्ति श्रीकृष्णाष्टमी'' इति उक्त्वा किञ्चित् स्थगयित्वा जनानां करताडनं निरीक्षितवान् ।

परं सः दृष्टवान् यत् केचन परिहासपूर्वकं तं पश्यन्तः सन्ति, अन्ये केचन हासम् अवरोद्धुं प्रयतमानाः सन्ति इति ।

तदा आश्चर्यचकितः शास्त्री वेदिकायाम् उपविष्टवन्तं तद्ग्रामस्थं सूर्यशास्त्रिणं पृष्टवान् - ''श्रीमन् ! मम उपन्यासे कोऽपि दोषः असम्बद्ध-विषयस्य प्रस्तावः वा अस्ति किम् ?'' इति ।

''श्रीमन् ! भवान् तु वाग्मी । अतः भवतः भाषणे दोषः असम्भवः एव । किन्तु अद्य रामनवमी, न तु कृष्णाष्टमी । अतः एव किञ्चित् असम्बद्धता अभवत्'' इति उक्तवान् सूर्यशास्त्री ।



# विशाखपत्तनतः गोपालपूरपर्यन्तम्

रचना - मीरानायर् ★ चित्राणि - गोपकुमारः




विशाखपत्तनतः उत्तरदिशि गमनेन वयं देशे एव दीर्घं समुद्रतीरमार्गं प्राप्नुमः । ततः २४ कि.मी. अग्रे गमनेन गोस्तनीनदी-समुद्रयोः सङ्गमस्थाने स्थितं सुन्दरं नगरं भीमुनीपत्तनं पश्यामः । पूर्वं १७ शतके तत् डच्जनानां सेनावसतिस्थानम् आसीत् । डच्शासनस्य अवशेषरूपेण अत्र कानिचन शिथिलानि दुर्गाणि, महागोलकास्त्रं, प्राचीनश्मशानानि च अद्यापि द्रष्टुम् उपलभ्यन्ते । पूर्वतीरे विद्यमानेन प्रसिद्धेन समुद्रतीरेण, हरितैः नारिकेलवनैः च युक्तत्वात् भीमुनीनगरं प्रेक्षणीयस्थानत्वेन परिगण्यते लोके ।

आन्ध्रप्रदेशस्य समुद्रतीरस्य अन्ते अस्ति श्रीकाकुलमण्डलम् । भारते एव प्रसिद्धः अनन्यः सूर्यनारायणदेवालयः अस्ति श्रीकाकुलस्य अरसवल्लिनगरे । गर्भगृहे विद्यमानस्य विग्रहस्य पादयोः उपरि वर्षे द्विवारं सूर्यकिरणाः यथा पतेयुः तथा मन्दिरं निर्मितम् अस्ति । १७७८तमे वर्षे एलमञ्चिल पुल्लाजिपन्तवर्यः एतस्य देवालयस्य समीकरणं कारितवान् ।

सूर्यनारायणदेवालयः





डच्स्मारकाणि



कूर्मः

अरसवल्लितः किञ्चिदेव दूरे उत्तरदिशि श्रीकूर्मनगरम् अस्ति । विष्णोः दशसु अवतारेषु द्वितीयः कूर्मावतारः । तस्य कूर्मावतारस्य प्रसिद्धः देवालयः अस्मिन् नगरे अस्ति, यश्च देशे एव अनन्यः अस्ति ।

अस्य देवालयस्य प्राकारे एव 'श्वेतपुष्करिणी' नाम पुष्करिणी अस्ति । अत्र क्षिप्तानि मृतानाम् अस्थीनि कूर्मरूपेण परिवर्तन्ते इति जनाः विश्वसन्ति ।

श्रीकाकुलमण्डलस्य उत्तरसीमायां गोदावर्याः उपनदी मचकुन्दा प्रवहति । एषा आन्ध्रप्रदेश-ओरिस्सा-राज्ययोः सीमायाम् अस्ति । १९५५ तमे वर्षे अगस्ट्मासे मचकुण्ड्थर्मल्-स्कीम्-कार्यम् आरब्धम् । द्वाभ्यां राज्याभ्यां मिलित्वा कार्यं कृत्वा यशस्वितया समापितं प्रथमं कार्यम् इदम् ।

प्राचीनकाले कलिङ्गदेशे ओरिस्सा-राज्यस्य भूयान् भागः, आन्ध्रप्रदेशस्य कश्चन भागः च संयुक्तः आसीत् । तदा श्रीलङ्कादेशेन, बर्मादेशेन, इण्डोनेषियादेशेन, पूर्व-एष्याखण्डस्य कैश्चित् देशैः च सह समुद्रवाणिज्यं प्रचलति स्म ।

कलिङ्गराज्यस्य नौकासामर्थ्यं प्रसिद्धम् आसीत् पूर्वम्

आदौ कलिङ्गतीरतः श्रीलङ्कादेशं प्रति भारतीयानां गमनम् आरब्धम् । पातारा, आल्फा, चरित्रपुरम् इत्यादिसमुद्रतीरस्थनगराणां द्वारा च वाणिज्यस्य वर्धनम् अभवत् ।

अस्माकं देशस्य इतिहासे कलिङ्गदेशस्य विशिष्टं स्थानम् अस्ति । मौर्यचक्रवर्ती अशोकः राज्यं विस्तारयितुम् इच्छन् आदौ एव कलिङ्गदेशेन सह युद्धं कृत्वा युद्धस्य परिणामं दृष्ट्वा विरक्तः सन् युद्धं स्थगयित्वा बुद्धस्य अहिंसामार्गम् अनुसृतवान् ।



क्रि.श. ४ - १२ शतकयोः मध्यभागे केसरि-गङ्गवंशीयानां शासनकाले ओरिस्साराज्ये वैभवस्थितिः आसीत् । स्वातन्त्र्यप्राप्तेः वर्षद्वयानन्तरं १९४९ तमे वर्षे २६ लघुसंस्थानानां संयोगेन ओरिस्साराज्यं निर्मितम् ।

आंग्लानां शासनकाले समुद्रवाणिज्यम् ओरिस्साराज्ये समाप्तप्रायम् अभवत् । तथापि पूर्वजानां समुद्रवाणिज्यस्य वैभवं न विस्मृतवन्तः ओरिस्साजनाः । ते प्रतिवर्षं तस्य स्मरणार्थं कार्तिकपूर्णिमादिने 'बोयटाबन्धन्'नामकम् उत्सवं आचरन्ति । पूर्वजैः आराधितायाः समुद्रदेवतायाः अनुग्रहं प्राप्तुं ते मृद्दीपान् ज्वालयित्वा लघुवेत्रनौकासु स्थापयित्वा नद्यां समुद्रे च प्लावयन्ति ।

इंग्लिष्कुल्यां तीर्णवान् प्रथमः भारतीयः मिहिरसेनः कलिङ्ग-जावादेशयोः समुद्रमार्गं पुनः अन्वेष्टुं पातारातः इण्डोनेषियां प्रति नौकया प्रयाणं कृतवान् आसीत् । प्राचीनकलिङ्गदेशस्य नौकायाः ४० फीट्दीर्घां प्रतिकृतिं

'बोयटाबन्धन्'नामकः उत्सवः

निर्माय तया एव प्रयाणं कृतवान् आसीत् सः ।

दक्षिण-ओरिस्साराज्ये स्थितम् अत्यन्तं प्रशान्तम् समुद्रतीरनगरं गोपालपुरम् । अस्य समुद्रस्य गोपालपुर् इति नामकरणं कृतमस्ति अधुना । अत्रत्याः जनाः अधुनापि प्राचीनं सम्प्रदायम् एव अनुसरन्ति । पर्वदिनेषु महिलाः प्रातः शीघ्रम् उत्थाय गृहस्य पुरतः जलसेचनं कृत्वा तण्डुलपिष्टेन सुन्दरीं रङ्गवल्लीं रचयन्ति । सूर्योदयात् पूर्वमेव समुद्रतीरे संमिल्य जनाः उदयमानं भगवन्तं सूर्यं प्रणम्य तस्मै पुष्पाञ्जलिं समर्पयन्ति । प्रार्थनागीतानि गीत्वा समुद्रे स्नानमपि कुर्वन्ति ।

अत्र समुद्रतीरेषु सिकताराशीनाम् उपरि श्वेताः सङ्केतस्तम्भाः निर्मिताः सन्ति । ते स्तम्भाः दिने मीनग्रहणसमये धीवराणां मार्गदर्शकत्वेन कार्यं कुर्वन्ति । रात्रौ दीपस्तम्भाः तेषां मार्गदर्शनं कुर्वन्ति ।

त्रिकोणाकारस्य शिरस्त्रस्य धारिणः अत्रत्याः धीवराः आन्ध्रवङ्गप्रान्तयोः धीवरेभ्यः पृथग्भूताः सन्ति ।

**मीनगोर्णीं तीरं प्रति आनयन्तः धीवराः**





# अदृष्ट-दुरदृष्टौ

*(गतसञ्चिकातः अनुवृत्ता)*

यदा सः दरिद्रः मणिस्पर्शनेन मणिकुण्डलस्य वेदनायाः उपशमनं कृतवान् तदा मणिकुण्डलः बहु सन्तुष्टः जातः । अनन्तरदिनेषु तौ आत्मीयौ जातौ । मणिकुण्डलः तस्य दरिद्रस्य पुरतः अनेकानि वाणिज्यरहस्यानि, समुद्रप्रयाणस्य अनुभवान् च वर्णितवान् । वाणिज्यं कुत्र कृतं चेत् लाभः अधिकः, कीदृशानां वस्तूनां विक्रयणेन अधिकः लाभः प्राप्यते, न्यायमार्गेण अपि लाभः कथं प्राप्तुं शक्यः इत्यादीन् बहून् विषयान् दरिद्रं बोधितवान् मणिकुण्डलः । तेषां श्रवणेन दरिद्रस्य भाषाज्ञानं वाणिज्यज्ञानं च वर्धितम् । वाणिज्ये निर्णयस्वीकारकुशलः जातः सः दरिद्रः ।

येन वाणिज्यरहस्यं ज्ञायते, यश्च औचित्यं निर्णीय व्यवहरति, सः वाणिज्ये सफलः भवेत् एव खलु ? दरिद्रः तु समर्थः वणिक् जातः आसीत् । अतः विशेषपरिश्रमं विनैव न्याय्येन मार्गेण प्रभूतं धनं सम्पादितवान् सः ।

एवं राक्षसद्वीपं प्रति गमनस्य अनन्तरं सार्धमासचतुष्टयाभ्यन्तरे एव वाणिज्य-कौशलबलात् द्विगुणितम् ऐश्वर्यं सम्पाद्य, मणिकुण्डलाय अनेकानि उपायनानि दत्त्वा स्वदेशं प्रति प्रस्थितवान् दरिद्रः । सः यदा स्वदेशं प्राप्तवान् तदा महाराजेन निर्दिष्टेषु षट्सु मासेषु पञ्चदश दिनानि एव अवशिष्टानि आसन् ।

धनिकवणिक् सन् स्वदेशम् आगतः दरिद्रः आदौ राजधान्यां महत् भवनं विक्रयणार्थं कुत्र अस्ति इति ज्ञात्वा तत् क्रीतवान् । तत्र आवश्यकसमीकरणादिकं कारयित्वा सुधावर्णादिभिः भवनम् अलङ्कृतवान् । स्तरानुगुणं सेवकादीनां

नियुक्तिं कृतवान् । एतावता अवधेः अन्तिमदिनमपि सन्निहितम् आसीत् ।

यदा षण्मासाः समाप्ताः तदा सः दरिद्रः महतः वणिजः वेषं धृत्वा राज्ञे अनेकानि उपायनानि स्वीकृत्य सुन्दरे अश्वशकटे उपविश्य राजदर्शनार्थं प्रस्थितः ।

अनेकाः कल्पनाः कुर्वन् राज्ञः अन्तःपुरं प्रविष्टः सः दरिद्रः ज्ञातवान् यत् गतमासद्वयात् राजा अनारोग्यपीडितः अस्ति इति । तस्य पृष्ठभागे उद्भूतः शोथः विभिन्नैः औषधोपचारैः अपि न अपगतः इत्यतः राजा बहु असन्तुष्टः इति अपि ज्ञातवान् सः दरिद्रः ।

तां वार्तां श्रुत्वा दिग्भ्रान्तः दरिद्रः 'गतपञ्चदशदिनेषु स्वकार्ये एव मग्नः अभवम् अहम् । राज्ञः विषये किमपि न विचारितवान् एव किल ?' इति चिन्तयन् दुःखम् अनुभवन् अपरक्षणे एव गृहं गत्वा तम् अपूर्वमणिम् आनीतवान् ।

दरिद्रः धनिकवेषेण उपस्थितः आसीत् इति कारणतः सुलभतया एव तेन राजदर्शनं प्राप्तम् । कान्तिहीनः कृशः राजा मञ्चे निश्चेष्टः सन् निद्रां कुर्वन् आसीत् । षण्मासेभ्यः पूर्वं यः आत्मस्थैर्येण युक्तः दृश्यते स्म तं राजानम् एतस्यां स्थितौ दृष्ट्वा नितरां खिन्नः जातः सः दरिद्रः । तदीये नेत्रे अश्रुपूरिते जाते । 'हे भगवन् ! भवतः माया नितरां विचित्रा' इति स्वगतम् उक्तवान् सः ।

एवं क्षणं यावत् दुःखम् अनुभूतवान् सः दरिद्रः अल्पे एव काले स्थैर्यं प्राप्य राज्ञः समीपं गत्वा तस्य पृष्ठस्य शोथम् अपूर्वमणिना स्पृष्टवान् ।

अहो ! अपरक्षणे एव राज्ञः पृष्ठभागे स्थितः शोथः अदृश्यतां गतः । चर्म नूतनकान्त्या युक्तं जातम् । अदृश्यतां गता



वेदना राज्ञि सन्तोषम् अजनयत् । सः मन्दं नेत्रे उद्घाट्य दृष्टवान् ।

तत्रैव स्थित्वा प्रवृत्तं सर्वं दृष्टवत्याः महाराज्ञ्याः नेत्रे आनन्दबाष्पैः पूरिते जाते । अप्रयत्नेन एव सा हस्ताभ्यां कृतज्ञतया तं दरिद्रं नमस्कृतवती ।

अपरस्मिन् क्षणे एव राजा उत्थाय मञ्चे उपविश्य महता सन्तोषेण - "कः सः ? मह्यं पुनर्जन्मदाता महानुभावः कः ?" इति पृष्टवान् ।

महाराज्ञी दरिद्रं दर्शितवती । राजा आश्चर्येण तं द्रष्टुं यावत् उद्युक्तः तावता एव दरिद्रः तं नमस्कृतवान् । अनुक्षणमेव राजा दरिद्रस्य हस्तौ गृह्णन् - "महानुभाव ! मयि स्थितं सर्वम् अपि दीयते चेत् अपि अहं भवतः ऋणात् मुक्तः न भवेयम् । मम दृष्ट्या तु भवान् एव द्वितीयधन्वन्तरिः । कृपया स्वपरिचयेन अनुगृह्यताम्" इति प्रार्थितवान् ।

तदा दरिद्रः किञ्चिदिव हसन् - "महाप्रभो ! नूतनतया परिचयप्राप्तेः आवश्यकता काऽपि नास्ति । आवयोः परस्परपरिचयः षण्मासेभ्यः पूर्वम् एव जातः अस्ति" इति उक्तवान् ।

ध्वनिना अभिजानन् राजा दरिद्रम् उद्दिश्य - "भवान् ! भवान् !" इति आश्चर्येण उक्तवान् ।

दरिद्रः राज्ञः हस्तं गृह्णन् तं मञ्चे सावधानम् उपवेशयन् - "प्रभो ! मम प्रस्तुतपरिस्थितेः कारणीभूतः भवान् एव । वृथा गौरवप्रदर्शनस्य आवश्यकता नास्ति एव । यथापूर्वं 'अयि भोः' इति सम्बोधनेन एव अलम् । मम कथां सर्वां श्रावयामि । प्रथमं भवान् आहारं स्वीकृत्य सायङ्काल-पर्यन्तं विश्रान्तिसुखम् अनुभवतु" इति उक्तवान् ।



मन्त्रमुग्धः इव राजा दरिद्रस्य वचनानुसारम् आहारं स्वीकृत्य निश्चिन्ततया निद्रां कृतवान् । सायं सन्तोषेण सुगन्धिजलेन स्नानं कृत्वा उद्याने उपविश्य भटद्वारा दरिद्रं तत्रैव आनायितवान् ।

किञ्चित्समयाभ्यन्तरे एव तत्र आगतः दरिद्रः राज्ञः पार्श्वे उपविश्य षण्मासेषु प्रवृत्तं सर्वं विवृतवान् ।

दरिद्रः सर्वम् उक्त्वा अन्ते - ''प्रभो ! मनुष्यः अपि सर्वशक्तः एव । परन्तु तस्मात् अपि शक्तिमत्तरः अस्ति देवः । पञ्चभूतात्मकात् मनुष्यात् शतगुणितं श्रेष्ठतरः अस्ति सृष्टिकर्ता परमेश्वरः । विधिः सर्वदा मानवजीवनस्य निर्देशनं कुर्वन् भवति । कदा अदृष्टं दुरदृष्टरूपं प्राप्नोति, कदा दुरदृष्टम् अदृष्टस्य कारणं भविष्यति इति महात्मानः अपि ऊहितुं न शक्नुवन्ति । परन्तु मनुष्येण करणीयं कार्यम् एकम् अस्ति । तच्च धर्मसूक्ष्माणि ज्ञात्वा तस्य अनुसरणम् । धर्मपालनेन एव मानवः देवस्य प्रीतिपात्रं भविष्यति । इदानीम् अस्माकं विषयम् एव परिशीलयतु । अहं राक्षसद्वीपं प्रति प्रेषणीयः इति भवता चिन्तितम् । तदनुगुणम् अहं राक्षसद्वीपं प्रति प्रेषितः अपि । किन्तु ततः मम हानिः काऽपि न जाता । प्रत्युत तस्याः दुरदृष्टघटनायाः कारणतः एव मया भवता चापि सौभाग्यं प्राप्तम् अस्ति । एतत् अङ्गीकरोति खलु भवान् ?'' इति पृष्टवान् ।

मौनेन गाम्भीर्येण च दरिद्रस्य वचनं श्रुतवान् राजा अङ्गीकारपूर्वकं शिरः चालितवान् ।

अनन्तरं हस्याभ्यां नमस्कुर्वन् - ''अयि भोः मित्र ! एषः नमस्कारः प्रथमतः लीला-नाटकसूत्रधारिणे तस्मै सर्वान्तर्यामिने । अनन्तरनमस्कारः तस्य दूताय भवते । एतस्मिन् प्रपञ्चे सर्वे उत्तमाः अपि भगवतः दूताः एव इति भवता एव उक्तम् आसीत् । स्मरति खलु तत् वचनम् ?'' इति उक्त्वा सन्तोषेण हसितवान् राजा ।

सौन्दर्यभरिते तस्मिन् उद्याने तदा एव कौमुदी सर्वत्र व्याप्ता आसीत् । सा भगवतः स्वच्छः हासः इव मनोल्लासकारिणी आसीत् ।



सुवर्णसमयः - १५



## चन्दमामायाः




**१.बृहदाकारकाः टिकाक्-देवालयाः..... ?**

त्रिकायाः, भारवाहकानां प्राणिनां वा साहाय्येन विना एव पिरमिड्-आकारेण शिलया एतादृशान् देवालयान् निर्मितवन्तः सन्ति

# विश्वे अस्माभिः एतानि कुत्र द्रष्टुं शक्यन्ते ?

प्रसिद्धाः मायाजातीयाः शिल्पिनः । एते मायाजनाः न केवलं शिल्पिनः, अपि तु महान्तः भूगोलशास्त्रज्ञाः, गणितज्ञाः चापि आसन् । क्रि.श. २५०तः ९०० पर्यन्तं मायाजनानां नागरिकता उच्छ्रायस्थितौ आसीत् ।



**२. यत्र च सप्टेम्बर्-अक्टोबर्मासयोः पक्षिणः विचित्ररीत्या व्यवहरन्ति तत् नगरम्.... ?**

हिमपातकाले रात्रौ विविधाः पक्षिणः भूमौ यत्किमपि प्रकाशमानं दृश्यते चेदपि तत्र पतित्वा प्राणान् त्यजन्ति । अन्ये केचन भूमौ मत्ताः सन्तः शयनं कुर्वन्ति । अतः तन्नगरीयाः तान् सुलभतया गृह्णन्ति । विज्ञानिनः एतस्य बहूनि कारणानि ऊहन्ते । किन्तु अद्यपर्यन्तम् अपि पक्षिणाम् आत्महत्यायाः वास्तविकं कारणं किमपि केनापि स्पष्टतया न ज्ञातम् अस्ति ।

**३. खण्डद्वये विद्यमानं नगरम्... ?**

प्राचीनयुगे, मध्ययुगे च क्रमशः बैजाण्टियं नाम्ना, कान्स्टाण्टिनोपल्-नाम्ना च प्रसिद्धम् इदं नगरम् एष्या-यूरोप्खण्डयोः मध्ये अस्ति । एतत् अधुना यूरोपखण्डस्य कस्यचित् मुस्लिंदेशस्य राजधानी अस्ति ।



## चित्र – समस्या

एतेषां समुद्रजीविनां नामानि कानि ?




## कथासमस्या

श्रेष्ठिनः गोविन्ददासस्य गृहे १,४०,००० रूप्यकाणां चौर्यम् अभवत् । तस्मिन् प्रदेशे मासत्रयाभ्यन्तरे प्रवृत्तं पञ्चमं चौर्यं तत् । अन्यत्र इव तत्रापि चोरः वातायनद्वारस्य काचकानि भित्त्वा अन्तः प्रविष्टवान् आसीत् । आरक्षकाधिकारी देसायीवर्यः वातायनसमीपे बहिः उद्याने पतितान् काचकखण्डान् परीक्षमाणः आसीत् । गृहस्य रक्षकः आगत्य तस्य पार्श्वे एव स्थितवान् ।

सः उक्तवान् – "श्रीमन्, रात्रौ अहं कमपि शब्दं न श्रुतवान् । प्रायः अर्धरात्रसमये धूमशकटस्य गमनसमये एव चोरः वातायनं भञ्जितवान् स्यात् । धूमशकटस्य महाशब्दः यदा प्रवर्तते तदा अन्यः कोऽपि शब्दः न श्रूयते खलु ? अन्यानि गृहाणि अपि चोरः तस्मिन् एव समये प्रविष्टवान् इति सर्वे वदन्तः सन्ति" इति ।



"अस्मिन् गृहे चोरितवतः 'गृहजनाः जागरिताः एव सन्ति' इति भीतिः अपि न आसीत् खलु ? चोरितानि वस्तूनि भवान् कुत्र स्थापितवान् ? वदतु तावत्" इति कोपेन पृष्टवान् आरक्षकाधिकारी ।

रक्षकः भयेन कम्पमानः सन् कृतं चौर्यम् अङ्गीकृतवान् । रक्षकः एव चोरः इति आरक्षकाधिकारी कथम् अभिज्ञातवान् इति भवन्तः किं वक्तुं शक्नुवन्ति ?



१. षट् शर्कराखण्डाः त्रिषु चायचषकेषु विषमसंख्यायां स्थापनीयाः । षण्णां खण्डानाम् अपि उपयोगः करणीयः एव । शर्कराखण्डः न भञ्जनीयः । एतां समस्यां कथं परिहरन्ति भवन्तः ?

## विनोदप्रश्नाः

२. भवतः मातुलस्य भगिनी भवतः मातुलानी तु न भवति । तर्हि भवतः तस्याः च कः सम्बन्धः ?

३. कदलीतैलं एतेषु कस्मात् प्राप्यते ?

- कदली
- शर्करा
- अङ्गारः



४. रिक्ते पञ्जरे कति कपीन् प्रवेशयितुं शक्नुवन्ति भवन्तः ?

५. पक्षिणः दक्षिणाभिमुखं किमर्थं डयन्ते ?

६. मम समीपे काचित् घटी अस्ति । सा दिने द्विवारम् एव सम्यक् समयं दर्शयति । अन्यदा सम्यक् न भवति । तर्हि सा कीदृशी घटी ?



**करणात् ज्ञायताम् -**

## अण्डस्य आवरणेन पत्रभारः

रिक्तम् अण्डस्य आवरणं सम्यक् क्षालयन्तु । प्लास्टर् आफ् प्यारीस् चूर्णं जलेन मिश्रीकृत्य अण्डस्य आवरणस्य अन्तः पूरयन्तु । यदा तत् शुष्कं भवति तदा अण्डस्य रन्ध्रयुक्तं भागम् अधोमुखं स्थापयन्तु । अण्डं भवदिष्टेन वर्णेन लेपयन्तु ।

अधुना भवताम् उपयोगाय सिद्धः एव पत्रभारः ।






## सुवर्णसमयस्य - (१४) उत्तराणि

**विश्वे कुत्र सन्ति ?**

१. इंग्लेण्ड्देशस्य केण्टमध्ये विद्यमाने डोपरमध्ये ।

२. बिहारस्य पाटनानगरे ।

३. स्टालिन्ग्रेड्मध्ये विद्यमाने मामयेव्पर्वतस्य उपरि ।

४. दक्षिण-आफ्रिकादेशस्य क्रूगर् राष्ट्रिय-उद्यानम् ।

**चित्रसमस्या**

१. अन्यत् एकं वृद्धायाः मुखम् । सुन्दर्याः कपोलः वृद्धायाः नासिका इव, सुन्दर्याः कण्ठपट्टिका वृद्धायाः मुखम् इव च दृश्यते ।

२. चित्रे चक्रस्य अराः प्रत्येकं स्फुटतया दृश्यन्ते । वेगेन चलन्त्याः द्विचक्रिकायाः अराः पृथग्रूपेण न दृश्यन्ते ।

**विनोदप्रश्नाः**

१.



२. न शक्नुमः ।

३. अ. बासिलिस्क्

आ. ड्रागन्

इ. फोनिक्स्

ई. यूनिकार्न्

४. मोहनः रक्तवर्णस्य शिरस्त्रं धृतवान् इति विनयः जानाति । विनयस्य शिरसि अपि यदि रक्तं शिरस्त्रं स्यात् तर्हि रामः स्वस्य शिरसि कृष्णं शिरस्त्रम् अस्ति इति अवदिष्यत् । रामस्य 'न जानामि' इति उत्तरं श्रुत्वा एव विनयः ज्ञातवान् यत् स्वस्य शिरसि कृष्णं शिरस्त्रम् अस्ति इति ।




"अयि सहोदराः, इतः परं वर्षं यावत् अस्माभिः अज्ञातवासः आचरणीयः अस्ति । अज्ञातवासकाले कोऽपि अस्मान् यथा न अभिजानीयात् तथा जागरूकता आश्रयणीया अस्माभिः । अज्ञातवासकालं कस्मिन् देशे यापयाम वयम् ?" इति पृष्टवान् धर्मराजः ।

"पाञ्चालः चेदिः, मत्स्यः, शूरसेनः, नवराष्ट्रं, मल्लः, साल्वः, युगन्धरः, कुन्तिः, सुराष्ट्रम्, अवन्ती इत्येते देशाः सुसमृद्धाः सन्ति । अतः तेषु कस्मिंश्चित् वयम् अज्ञातवासाचरणं कर्तुं शक्नुयाम । धर्मदेवतायाः अनुग्रहस्य कारणतः अज्ञातवासकाले कोऽपि विघ्नः न आपतिष्यति इति भावयामि अहम्" इति उक्तवान् अर्जुनः ।

"मत्स्यदेशस्य राजा विराटः धर्मशीलः पराक्रमी च इति श्रूयते । सः अस्मद्धितकाङ्क्षी चापि । अतः वयं वर्षं यावत् तस्य सेवां करवाम । भवत्सु कः कां वृत्तिं कर्तुं शक्नोति ?" इति पृष्टवान् धर्मराजः ।

तदा अर्जुनः खेदमिश्रितस्वरेण - "अग्रज ! वयं तु यया कयाचित् वा वृत्त्या जीवितुं शक्नुयाम । किन्तु येन कदापि अन्यस्य सेवा एव न कृता तादृशः भवान् कथं वा विराटराजस्य सेवां कुर्यात् इत्येव चिन्ता अस्माकम् । भवतः भाविनीं दशां स्मरन्तः नितरां खेदम् अनुभवामः वयम्" इति उक्तवान् ।

"अहं ब्राह्मणवेषं धृत्वा कङ्कनाम्ना विराटस्य सभां प्रवेक्ष्यामि । अक्षक्रीडया विराटं तत्सामन्तराजान् च तोषयिष्यामि । 'इतःपूर्वं भवान् किं करोति स्म ?' इति यदि ते पृच्छेयुः तर्हि 'धर्मराजस्य आत्मीयः आसम्' इति वदिष्यामि" इति उक्त्वा



धर्मराजः भीमं दृष्ट्वा - ''भीमसेन ! विराटस्य आस्थाने किं वा करिष्यति भवान् ?'' इति पृष्टवान् ।

''पाककरणे मम सामर्थ्यम् अस्ति । अतः वललनाम्ना अहं तस्य आस्थानं प्रवेक्ष्यामि । अपूर्वैः पाकैः विराटं सन्तोषयिष्यामि च । आयुधं विनैव काष्ठानि विदार्य महान्तं काष्ठराशिम् अपि लीलया आनेष्यामि । साहसकार्यार्थम् अपि राजा माम् एव यथा आह्वयेत् तथा करिष्यामि । राज्ञः मनोरञ्जनार्थं श्रेष्ठम् अपि मल्लं जेष्यामि । यदि कोऽपि पृच्छेत् तर्हि - 'अहं पूर्वं धर्मराजस्य पाचकः आसम्' इति वदिष्यामि । कोऽपि माम् अभिज्ञातुं यथा न शक्नुयात् तथा जागरूकतया व्यवहरिष्यामि । मद्विषये काऽपि चिन्ता करणीया नास्ति भवद्भिः'' इति उक्तवान् भीमः ।

अर्जुनस्य तु समस्या न आसीत् । 'नपुंसकः भवतु भवान्' इति पूर्वम् ऊर्वशी यदा शापं दत्तवती आसीत् तदा एव इन्द्रः उक्तवान् आसीत् यत् अज्ञातवासकाले वर्षं यावत् भवान् नपुंसकत्वम् अनुभवतु इति ।

''अहं बृहन्नलानाम्ना विराटस्य आस्थानं प्रवेक्ष्यामि । हस्तस्थाः किणादयः यथा न दृश्येरन् तथा कङ्कणानि धरिष्यामि । नपुंसकवेषेण गत्वा विराटस्य अन्तःपुरस्त्रीः तोषयिष्यामि । 'पूर्वं भवान् किं करोति स्म ?' इति यदि कोऽपि पृच्छेत् तर्हि - 'अहं द्रौपद्याः सेवां करोमि स्म' इति वदिष्यामि'' इति उक्तवान् अर्जुनः ।

''अहं दामग्रन्थिनाम्ना विराटस्य आस्थानं प्रविश्य अश्वानां पर्यवेक्षकः भविष्यामि । अश्वानां चिकित्साम् अपि करिष्यामि । अश्वचिकित्सा तु मया सम्यक् ज्ञायते एव । 'पूर्वम् अहं धर्मराजस्य आस्थाने अश्वाधिकारी आसम्' इति वदिष्यामि'' इति उक्तवान् नकुलः ।

''तन्त्रपालनाम्ना विराटस्य आस्थानं प्रविश्य अहं विराटस्य गवां सेवां करिष्यामि । एतादृशं कार्यं मया पूर्वं कृतम् आसीत् एव । पशुचिकित्सा अपि मया ज्ञातपूर्वा एव'' इति उक्तवान् सहदेवः ।

'द्रौपदीविषये किं करणीयम्' इति न ज्ञातं धर्मराजेन । सा सर्वदा एव अन्यसेवां प्राप्तवती आसीत्, न तु कस्यापि सेवां कृतवती आसीत् । कोमलकाया सा सदा पतिसन्निधौ एव भवति स्म ।

धर्मराजस्य चिन्ताम् अवगतवती द्रौपदी – ''मद्विषये चिन्ता किमर्थम् ? सैरन्ध्रीकार्यं करिष्यामि अहम् । सैरन्ध्री सेविका इव न दृश्यते । अहं स्त्रीणां केशप्रसाधनेन, अलङ्करणेन च राजपरिवारस्य महिलाः तोषयन्ती सुदेष्णायाः आधीन्ये रहसि स्थास्यामि'' इति उक्तवती ।

अनुजैः द्रौपद्या च श्रावितं निर्णयं श्रुत्वा धर्मराजः नितरां सन्तुष्टः । 'भवन्तः द्रुपदसमीपं गच्छन्तु' इति धौम्यं, सूतम्, अन्यान् च सूचितवान् सः । 'रिक्तं रथम् आरुह्य भवन्तः द्वारकां गच्छन्तु' इति इन्द्रसेनप्रभृतीन् मन्त्रिणः उक्तवान् । ''पाण्डवाः कुत्र गताः इति वयं न जानीमः इति सर्वत्र वदन्तु'' इति तान् सर्वान् सूचितवान् ।



'राजसेवासमये कथं व्यवहरणीयम्' इत्यादिकं पाण्डवान् बोधितवान् धौम्यः । सर्वेषां निर्गमनस्य अनन्तरं पाण्डवाः आयुधानि गृहीत्वा द्वैतवनात् प्रस्थितवन्तः । नदीः पर्वतान् च अतिक्रम्य गच्छन्तः ते मत्स्यदेशं प्राप्तवन्तः । मत्स्यदेशः दशार्णात् उत्तरतः, पाञ्चालात् दक्षिणतः, शूर-सेन-देशयोः मध्ये च आसीत् ।

मत्स्यदेशे पदं स्थापितवती द्रौपदी महतीं श्रान्तिम् अनुभवन्ती – ''अत्र मार्गाः सम्यक् न सन्ति । समीपे कृषिभूम्यादयः न दृश्यन्ते । एतस्मात् भासते यत् विराटनगरम् इतः सुदूरे स्यात् इति । अहं नितरां श्रान्ता अस्मि । अग्रे गमनं सर्वथा असाध्यम् । अतः अद्य रात्रौ अत्रैव वासं कृत्वा श्वः गमनम् अनुवर्तयाम'' इति उक्तवती ।

तस्मिन् एव दिने अरण्यस्य अतिक्रमणम् इच्छन् धर्मराजः अर्जुनं सूचितवान् यत् भवान् द्रौपदीम् उन्नयतु इति । अर्जुनः तथैव कृतवान् । ततः अग्रे गताः ते विराट-नगरसीमां प्राप्तवन्तः । 'इदानीम् आयुधविषये किं करणीयम् ?' इति चिन्ता प्राप्ता धर्मराजेन । 'आयुधैः सह नगरप्रवेशः न युक्तः । तत्रापि अर्जुनस्य गाण्डीवं तु सर्वैः ज्ञायते एव । अस्माकम् अभिज्ञानार्थं तत् उपकुर्यात् अपि' इति चिन्तयित्वा धर्मराजः अर्जुनं सूचितवान् यत् आयुधानां गोपनार्थं योग्यं स्थलम् अन्विष्यतु इति ।

अर्जुनः परितः सुसूक्ष्मं दृष्टवान् । तत्र सः श्मशानभूमिं, विशालम् उन्नतं शमीवृक्षं च दृष्टवान् । 'अत्र कोऽपि न आगच्छति प्रायः । आगच्छेत् चेदपि शमीवृक्षस्य



शिखरभागं न परिलक्ष्यते । अतः शमीवृक्षस्य शाखानां मध्ये आयुधानां स्थापनं वरं भवेत्' इति निश्चितवान् अर्जुनः ।

सर्वे आयुधानि स्कन्धात् अवतार्य भूमौ स्थापितवन्तः । तानि सम्यक् बद्धानि । धर्मराजस्य आज्ञायाः अनुगुणं नकुलः शमीवृक्षम् आरुह्य यत्र जलबिन्दुः अपि न पतेत् तत्र पर्णसमूहस्य मध्ये आयुधानि स्थापयित्वा तदुपरि एकं शवम् अपि स्थापितवान् ।

शवस्य उन्नयनसमये कोऽपि गोपालकः दूरात् दृष्टवान् एव । तदा पाण्डवाः तम् उद्दिश्य - ''शताधिकवर्षीया अस्माकं पितामही दिवं गता अस्ति । कुलाचारानुगुणं तस्याः शवः शमीवृक्षस्य उपरि स्थापितः'' इति उक्तवन्तः ।

अनन्तरं ते विराटनगरं प्रति प्रस्थितवन्तः । परस्पराभिज्ञानार्थं ते जयः, जयन्तः, विजयः, जयत्सेनः, जयद्बलः इत्येतानि गुप्तनामानि अपि निश्चितवन्तः ।

विराटनगरगमनमार्गे धर्मराजः दूर्गादेवीं ध्यात्वा - ''अम्ब ! भवती एव शरणम् अस्माकम् । कृपया अस्मान् रक्षतु'' इति प्रार्थितवान् । तदा दुर्गा दिव्यरूपं धृत्वा प्रत्यक्षीभूय - ''अचिरात् एव प्रवर्तिष्यमाणे युद्धे जयं प्राप्य भवान् सुखं प्राप्स्यति'' इति उक्त्वा आशीर्वादेन अनुगृह्य अन्तर्हिता अभवत् ।

अनन्तरं धर्मराजः नद्यां स्नात्वा नमस्कारस्थितौ तिष्ठन् धर्मदेवतां ध्यात्वा - ''यक्षरूपेण आगत्य भवता यस्य वरस्य दानं प्रतिज्ञातम् आसीत् तं वरम् अहम् इदानीं प्राप्तुम् इच्छामि'' इति प्रर्थितवान् ।

अनन्तरक्षणे एव कमण्डलुधारिणः काषायवस्त्रधारिणः यतेः रूपं प्राप्तं तेन । अन्येषाम् अपि वेषपरिवर्तनार्थम् अपेक्षितानि साधनानि तत्र प्रत्यक्षीभूतानि । ततः सर्वे पाण्डवाः स्वस्य अपेक्षायाः अनुगुणं साधनानि चित्वा यथोचितं वेषपरिवर्तनं कृतवन्तः ।

धर्मराजः अक्षसाधनानि उत्तरीयेण बद्ध्वा विराटस्य आस्थानम् आगतवान् । संन्यासिवेषेण स्थितस्य तस्य मुखस्य कान्तिं दृष्ट्वा विराटः नितराम् आश्चर्यचकितः । 'यदि एतस्य पृष्ठतः परिवारः कोऽपि स्यात् तर्हि एषः चक्रवर्ती इव एव भासेत' इति भावनां प्राप्तवान् विराटः ।

धर्मराजः विराटसमीपम् आगत्य - "राजन् ! सर्वस्वस्य नाशात् खिन्नः अहं कानिचन दिनानि भवतः आस्थाने स्थातुम् इच्छन् अत्र आगतः अस्मि । व्याघ्रपादगोत्रं मम । कङ्कः इति मम नाम । पूर्वम् अहं धर्मराजस्य आप्तः आसम् । द्यूते अहम् एव यदि पराजयं प्राप्नुयां तर्हि अपि धर्मराजः मत्तः किमपि न स्वीकरोति स्म । भवता अपि मद्विषये तथैव व्यवहरणीयम् इति मम अपेक्षा" इति उक्तवान् ।

एतत् श्रुत्वा विराटः - "भवतः अत्र स्थितिः मम सन्तोषाय एव । भवतः असन्तोषः यथा स्यात् तथा मम परिवारस्य सदस्यः कोऽपि यदि व्यवहरेत् तर्हि तम् अहं दण्डयेयम् । कस्मैचित् अपि धनदान्यादिकं भवता दातव्यं भवति चेत् भवान् निस्सङ्कोचं मां सूचयतु । अहं दास्यामि । सर्वे माम् इव भवन्तम् अपि आदरेण द्रक्ष्यन्ति अत्रत्याः" इति उक्तवान् ।

ततः अल्पे एव काले श्वेतवस्त्रधारी भीमः राज्ञः समीपम् आगतवान् । तस्य एकस्मिन् हस्ते दर्वी, अपरस्मिन् छुरिका च आसीत् । सः विराटं नमस्कृत्य - "मम नाम वललः इति । विविधान् रुचिकरान् पाकान् सज्जीकर्तुं समर्थः अस्मि अहम्" इति उक्तवान् ।

"प्रथमदर्शनात् एव भासते खलु - भवान् पाचकः न स्यात् इति ?" इति उक्तवान् विराटः ।

"मम पाकस्य वैशिष्ट्यं धर्मराजः सम्यक् जानाति । शक्त्या अपि अहम् अद्वितीयः अस्मि । गजैः सह, सिंहेन सह वा लीलया युद्धं कर्तुं शक्नोमि अहम्" इति उक्तवान् भीमः ।

"भवतु नाम । मम पाकशालायां पाचकप्रमुखः सन् भवान् कार्यं करोतु"





इति उक्त्वा विराटः भीमं पाकशालां प्रति प्रेषितवान् ।

अत्रान्तरे द्रौपदी मलिनवस्त्राणि धृत्वा विकीर्णकेशा सती सैरन्ध्रीवेषेण मार्गे सञ्चारम् आरब्धवती । तां दृष्ट्वा नगरवासिनः पृष्टवन्तः - ''अम्ब ! का भवती ? किं करोति भवती ?'' इति ।

तदा द्रौपदी उक्तवती - ''अहं सैरन्ध्री । यः मां पोषयति तस्य यथोचितसेवा मम वृत्तिः'' इति ।

प्रासादस्य अट्टे स्थित्वा सुदेष्णा द्रौपदीं दूरात् एव दृष्ट्वा सेविकाद्वारा स्वसमीपम् आनाय्य - ''का भवती ? किं कार्यं करोति भवती ?'' इति पृष्टवती ।

''देवि ! अहं सैरन्ध्री । केशप्रसाधनं, सुगन्धद्रव्यलेपनं, पुष्पालङ्कारः, माला-रचनम् इत्यादिषु अहं निष्णाता । कृष्णस्य पत्नी सत्यभामा, पाण्डवानां पत्नी द्रौपदी च मम कार्यं दृष्ट्वा पूर्वं बहुवारं श्लाघितवत्यौ । द्रौपदी तु मां प्रेम्णा 'मालिनी' इति सम्बोधयति स्म'' इति उक्तवती द्रौपदी ।

''भवत्याः रूपं तावत् उत्कृष्टम् अस्ति यत् दर्शनमात्रेण कोऽपि पुरुषः सम्मोहितः भवेत् । भवतीं यदि महाराजः पश्येत् तर्हि सः मम मुखम् अपि द्रष्टुं न इच्छेत् । अतः मम अन्तःपुरे भवत्यै आश्रयदानार्थम् अहं बिभेमि'' इति उक्तवती सुदेष्णा ।

''महाराज्ञि ! मत्कारणतः कस्यापि चित्तं विकलं न भविष्यति । कोऽपि मां कलुषीकर्तुम् अपि न शक्नोति । पञ्च गन्धर्वाः मम पतयः । ते प्रतिक्षणं मां पश्यन्तः भवन्ति । अन्यस्य पादक्षालने, पूर्वदिनान्नखादने च यदि भवती मां न प्रवर्तयेत् तर्हि अहं सन्तोषेण भवत्याः सेवां कुर्याम् । अहं सामान्यस्त्रीवत् एव भवत्या द्रष्टव्या । यदि कोऽपि मां पीडयेत् तर्हि मम पतिषु अन्यतमः कश्चित् तं रात्रि-समाप्त्यभ्यन्तरे मृत्युलोकातिथिं कुर्यात्'' इति उक्तवती द्रौपदी ।

सुदेष्णा द्रौपद्यै आश्रयदानम् अङ्गीकृतवती ।

अनन्तरं नपुंसकवेषेण अर्जुनः विराटसभां प्रविष्टवान् । रक्तवस्त्रधारी सः राजसमीपम् आगत्य - ''महाराज ! मम नाम बृहन्नला इति । नाट्यकलायां मत्समाना अन्या व्यक्तिः नास्ति लोके । वेणीरचनं, मालाग्रथनम् इत्यादिषु अपि अहं निपुणा अस्मि'' इति उक्तवान् ।

विराटः तद्वचने अविश्वासं प्रकटयन् - ''भवदङ्गसौष्ठवं तावत् धनुर्विद्यानिपुणस्य इव एव अस्ति खलु ?'' इति उक्तवान् ।

''अहं तु धनुषः सामान्योपयोगम् अपि न जानामि । एवं स्थिते नैपुण्यस्य का कथा ? सङ्गीते मम श्रमः । वीणा-मृदङ्गादिवादने नृत्ये चापि अहं निपुणा अस्मि'' इति उक्तवान् अर्जुनः ।

ततः विराटः पुत्रीम् उत्तराम् आहूय - ''वत्से ! एषा बृहन्नला । इतः परं भवती एतस्याः सकाशात् नृत्यादिकम् अभ्यस्यतु'' इति उक्तवान् । अर्जुनः उत्तरया सह अन्तःपुरं प्रति गतवान् ।

ततः अल्पे एव काले विराटः यदा अश्वशालां गतवान् तदा नकुलः अश्वान् परीक्षादृष्ट्या निर्निमेषं पश्यन् तत्र स्थितः आसीत् । विराटः भटम् उद्दिश्य - ''एषः तरुणः अश्वविद्यानिपुणः इव भाति । एतं सभाम् आनयतु'' इति आदिश्य ततः गतवान् ।

राजसभां गतः नकुलः विराटम् उद्दिश्य - ''महाराज ! जीविकाप्राप्त्युद्देशेन अहं भवतः देशम् आगतवान् अस्मि । यदि अहम् अश्वानां पर्यवेक्षणे नियोजितः स्यां तर्हि अश्वानां प्रशिक्षणे चिकित्सायां च साहाय्यं कुर्याम् । पूर्वम् अहं धर्मराजस्य अश्वशालायां प्रमुखः आसम् । मम नाम दामग्रन्थिः इति'' इति उक्तवान् ।

विराटः तस्य निवेदनं पुरस्कुर्वन् तम् अश्वशालायाः रथव्यवस्थायाः च प्रमुखं कृतवान् ।

ततः अल्पे एव काले सहदेवः विराटस्य आस्थानं प्रविष्टवान् । सः गोपालकस्य वेषं धृत्वा पुष्पहारं चापि धृत्वा रज्जुं दीर्घदण्डं च हस्तेन गृहीतवान् आसीत् । सः राजसमीपम् आगत्य - ''महाराज ! अहम् अरिष्टनेमिः नाम कश्चन वैश्यः । धर्मराजस्य सहस्त्रशः गावः मदधीनाः आसन् । गोपालने अहं निपुणः । मां तन्त्रपालनाम्ना अपि निर्दिशन्ति जनाः'' इति उक्तवान् ।

विराटः सन्तोषेण तं गोपालकगणस्य प्रमुखं कृतवान् ।

एवं पञ्च अपि पाण्डवाः द्रौपदी च विराटस्य आस्थानं प्रविश्य अज्ञातवासम् आरब्धवन्तः ।

- (अनुवर्तते)



# र स वा र्ताः

## कारुण्यम्

जर्मन्देशे करुणामयाः जनाः सङ्घटिताः सन्तः 'ऐसक्'नामिकां संस्थां संस्थापितवन्तः सन्ति । "भारतीयबालकानां भविष्यार्थम्" इत्यस्य अर्थस्य संक्षेपः एव 'ऐसक्' । गेर्वार्ड नाम कश्चित् धनागारपतिः अस्याः संस्थायाः अध्यक्षः । श्रमिकमन्त्री (labour minister) डा।। नार्बर्ट ब्लूम् अस्याः प्रमुखः पोषकः । जर्मन्वासिनः भारतीयान् विहाय अस्यां संस्थायाम् आहत्य १६० सदस्याः सन्ति । जन्मदिनम्, विवाह-महोत्सवः इत्यादिषु अवसरेषु ते सर्वे संस्थायै उदारतया उपायनं यच्छन्ति । एवं सङ्गृहीतेन धनेन अस्माकं देशे बालानां शिक्षणं, विकलाङ्गानां साहाय्यं, चिकित्सालयग्रन्थालयादीनां भवन-निर्माणम् इत्यादीनां कार्याणां निमित्तं साहाय्यं करोति संस्था । आत्मना दीयमानस्य साहाय्यस्य उपयोगः कथं क्रियमाणः अस्ति इति द्रष्टुं तस्याः सदस्याः केचन तदा तदा भारतम् आगच्छन्ति । देशस्य सीमा कारुण्यस्य प्रतिबन्धिका न भवति खलु ?

## भारतीयचित्राणां क्रयणे महदौत्सुक्यम्

'क्रिस्टीस्' - लण्डन्नगरीया सुप्रसिद्धा सघोषविक्रयणसंस्था । एषु दिनेषु तया यत् सघोषविक्रयणं व्यवस्थापितम् आसीत् ततः ज्ञायते यत् विदेशीयाः कलाभिमानिनः भारतीयचित्राणां क्रयणे विशेषोत्साहवन्तः इति । राज्ञा रविवर्मणा शाटिकां धरन्त्याः महिलायाः यत् चित्रं लिखितम् आसीत् तत् निश्चितमूल्यात् अपि द्विगुणितमूल्येन, तन्नाम २०,३०,००० रूप्यकैः, विक्रीतम् अभवत् । एन्.एस्. बेन्द्रेवर्येण रचितं चित्रं ११,६०,००० रूप्यकमूल्येन विक्रीतम् अभवत् । के.के. हेब्बार्, गणेशपैन्, अञ्जली, इलमेनन् इत्यादिभिः रचितानि चित्राणि अपि अधिकमूल्येन एव विक्रीतानि इति ज्ञायते । लण्डन्नगरीया अन्या सुप्रसिद्धा 'सोत्बी'नामिका सघोषविक्रयणसंस्था अक्टोबर्मासे न्यूयार्क्नगरे भारतीयचित्राणां विक्रयणं व्यवस्थापयिष्यति । गते वर्षे ६०० भारतीयचित्राणि विक्रीतानि अभवन् ।



## उत्तरध्रुवं प्राप्तवती प्रथमा महिला

फ्रान्स्देशस्य डा।। क्रिस्टिन् जानियन् नाम चत्वारिंशद्वर्षीया महिला सेर्गी ओगो रोड्निकोव्-नामकेन रष्यादेशीयेन मार्गदर्शकेन सह रष्यादेशस्य उत्तरभागतः उत्तरध्रुवं प्रति गते मार्च्मासे तृतीयदिनाङ्के पादाभ्याम् एव गतवती । लक्ष्यं प्राप्तुं षष्ट्यधिकदिनानि अपेक्षितानि अभवन् । पादाभ्याम् उत्तर-ध्रुवगमनमात्रं तस्याः लक्ष्यं न आसीत् । सा मार्गे बालानां चिकित्सानिधेः निमित्तं धनसङ्ग्रहणम् अपि कृतवती ।

चन्दमामायाः
अनुबन्धः - १०५



## अस्माकं देशस्य सौन्दर्यस्थानानि

# भागवतमेलनम्




तमिलुनाडुराज्ये तञ्जावूरुतः १८ कि.मी. दूरे 'मेलट्टूर्' नामकः ग्रामः अस्ति । अत्र प्रतिवर्षं नरसिंहजयन्तीसमये भागवतमेलन-नाम्ना नृत्यरूपकाणि प्रचलन्ति। एषः उत्सवः द्रष्टृषु विशिष्टम् आनन्दं जनयति। वीथीनाटकसदृशम् इदं गीतरूपकं तत्रत्यं विशिष्टम् आकर्षण-केन्द्रम् अस्ति ।

भागवतमेलनस्य विषये विस्तरेण ज्ञातुम् अस्माभिः ५०० वर्षाणां पुरातनः इतिहासः अवलोकनीयः भवति । तदा दक्षिणभारतस्य तेलुगुभाषिणः राजानः कलोपासकाः आसन् । सांस्कृतिककार्याणां प्रोत्साहनं स्वकर्तव्यं मन्यन्ते स्म ते । अतः भागवतमेलनकार्यक्रमार्थमेव ते तं ग्रामं तत्रैव वसद्भ्यः ५०० ब्राह्मणपरिवारेभ्यः उपायनरूपेण दत्तवन्तः ।

मेलुट्टूरुग्रामस्य वरदराजस्वामि-देवस्थानस्य पुरतः विद्यमाने मार्गे एव अस्य रूपकस्य प्रदर्शनाय वेदिका निर्मीयते । देवालयस्य उत्सवमूर्तिम् अपि अलङ्कृत्य तदा देवालयस्य महाद्वारे स्थापयन्ति भक्ताः । अतः अस्य रूपकस्य प्रदर्शनं देवस्य पुरतः एव भवति इति सर्वे मन्यन्ते । वेदिकायाः नेपथ्ये वाद्यवादकाः अपि भवन्ति ।

रूपकस्य वस्तु तु पुराणेभ्यः स्वीक्रियते । अद्यपर्यन्तम् एतस्य रूपकस्य प्रदर्शकाः मेलुट्टूरुग्रामवासिनः पुरुषाः एव भवन्ति स्म ।

साररूपेण वक्तव्यं चेत् भागवतमेलनं कश्चन अपूर्वः रमणीयः रूपककार्यक्रमः ।

पुराणकालस्य राजान

# ब्रह्मदत्तः

पाञ्चालराजः ब्रह्मदत्तः बहु करुणावान् आसीत् । सः धर्मेण राज्यपरिपालनं करोति स्म । सर्वेषां प्राणिनां भाषाः ज्ञातुं तस्मिन् विशिष्टा शक्तिः आसीत् ।

एकदा सः सायङ्काले पत्न्या सह उद्याने विहरन् आसीत् । तदा सः समीपे विद्यमानं गुल्मं दृष्ट्वा उच्चैः हसितवान् । राज्ञी अपि गुल्मं दृष्टवती । तत्र किमपि न आसीत् । अतः सा पतिं पृष्टवती - "प्रभो, भवतः हासस्य कारणं किम् ?" इति ।

"विशिष्टं कारणं किमपि नास्ति, त्यजतु तत्" इति उक्तवान् राजा ।

एतेन उत्तरेण राज्ञी न तृप्ता । "परिसरः प्रशान्तः निश्शब्दः च अस्ति । तथापि भवान् किमर्थं हसितवान् ? हासकारणं भवता वक्तव्यम् एव" इति अनुरोध-पूर्वकम् उक्तवती राज्ञी ।

ब्रह्मदत्तः सत्यसन्धः राजा इति कारणतः सर्वेषां प्राणिनां भाषाः ज्ञातुं शक्नोति स्म । "गुल्मे द्वे पिपीलिके अल्पविषयार्थं महान्तं कलहं कुर्वत्यौ आस्ताम् । तत् दृष्टवतः मम हासः आगतः" इति उक्तवान् ब्रह्मदत्तः ।

परन्तु राज्ञी तस्मिन् न विश्वसितवती । राजा परिहासार्थं किमपि वदन् अस्ति इति मत्वा सा उक्तवती - "भवान् यत् वदति तस्मिन् विश्वसितुम् अहं मन्दमतिः न" इति ।

"मया उक्तम् अक्षरशः सत्यम्" इति राजा पुनः उक्तवान् ।

तदा राज्ञी पृष्टवती - "तर्हि एतादृशी अपूर्वा शक्तिः कुतः प्राप्ता भवता ?" इति ।

स्वेन तादृशी शक्तिः कथं प्राप्ता इति न जानाति स्म । अतः सः तस्मिन् विषये गभीरं चिन्तनम् आरब्धवान् । ध्यानमग्नः सन् सः देवं प्रार्थितवान् । अनन्तरदिने राजभवनस्य समीपे यदा सः आसीत् तदा अटन् कश्चित् वृद्धः ब्राह्मणः तं दृष्ट्वा एकं श्लोकम् उक्तवान् । तस्मिन् श्लोके ब्रह्मदत्तस्य पूर्वजन्मनः कथा वर्णिता आसीत् ।

ब्रह्मदत्तः पूर्वः कश्चित् मुनिकुमारः आसीत् । कदाचित् सर्वत्र क्षामः आगतः । अथ कदाचित् बूभूक्षां सोढुम् अशक्तवान् सः गुरोः एकं पशुं मारयित्वा तस्य मांसं खादितवान् आसीत् । एतस्य पापस्य फलेन सः बहूनि जन्मानि प्राप्य कष्टानि अनुभूतवान् आसीत् । पुनः मुनि-कुमाररूपेण जन्म प्राप्तम् आसीत् तेन । तदा सः एकस्य राज्ञः वैभवं दृष्ट्वा आश्चर्यचकितः । तेन अस्मिन् जन्मनि सः राज्ञः जन्म प्राप्तवान् आसीत् ।

सर्वेषु प्राणिषु आत्मानं द्रष्टुं सः पूर्वजन्मनि समर्थः आसीत् इति कारणतः राजजन्मनि अपि प्राणिनां भाषाः ज्ञातुं शक्तः आसीत् सः । पूर्वजन्मनः स्मरणेन राजा मूर्च्छितः अभवत् । किञ्चित्कालानन्तरं जागरितः सः राजा भक्तिमार्गेण एव गच्छन् शेषजीवनं यापितवान् ।

पूर्वजन्मनि सम्पादिता शक्तिः अपरस्मिन् जन्मनि प्रकटिता भवति इति ब्रह्मदत्तस्य एषा कथा अस्मान् बोधयति ।



## प्लवमानाः हिमपर्वताः

समुद्रे प्लवमानाः महान्तः हिमपर्वताः 'ऐस्बर्ग्' इति कथ्यन्ते आंग्लभाषया । ध्रुवप्रदेशे विद्यमानाः हिमपर्वताः विदीर्णाः सन्तः प्लवमानाः अग्रे गच्छन्ति । एतादृशेषु महत्तमाः हिमपर्वताः दक्षिणध्रुवप्रदेशे अधिकतया दृश्यन्ते । ६० मैल्विशालाः, २५० द्वादशाङ्गुलोन्नताः एते पर्वताः अण्टार्कटिक्हिमपर्वतेभ्यः जाताः सन्ति । तात्कालिकानि वायुपरिशोधन-केन्द्राणि परिशोधनविमानानाम् अवतरणार्थं विमानस्थानकानि च एतेषां पर्वतानां उपरि निर्मान्ति वैज्ञानिकाः । सामान्यतः उत्तरध्रुवप्रदेशे एते पर्वताः लघु भवन्ति । ते प्रायः ग्रीनूल्याण्ड्तः उत्तर-अट्लाण्टिक्दिशि दक्षिणाभिमुखं प्लवन्ते ।




## इन्द्रधनुः

### उपयोगिनी लिपिः

सप्तदशवर्षीयेण विद्यार्थिना लूयी ब्रेयिल्वर्षेण अन्धानां जीवने महत् परिवर्तनम् आनीतम् अस्ति - ब्रेयिल्-लिपि संशोधनद्वारा । अनया अन्धाः अपि पठितुं लेखितुं च शक्नुवन्ति ।

ऊर्ध्वकाय-रेखाः अङ्गुलीनाम् अग्रभागेन स्पृष्ट्वा सुलभतया पठितुं शक्नुवन्ति अन्धाः । षड्भिः अक्षरपिञ्जैः युक्तेन उट्टङ्कनयन्त्रसदृशेन यन्त्रेण ब्रेयिल्लिपेः मुद्रणं प्रचलति लोके ।





# कृपणाग्रेसरः

कस्मिंश्चित् ग्रामे रविचन्द्रः नाम धनिकः आसीत् । सः मरणात् पूर्वम् एव स्वस्य सम्पत्तिं पुत्रयोः हरि-गिर्योः विभज्य दत्तवान् । तस्य सम्पत्तिः तावती आसीत्, या च तत्कुलजातैः सर्वैः अपि कार्यम् अकृत्वा वैभवेन जीवनं यापितं चेदपि क्षतिं न प्राप्नुयात् ।

महती सम्पत्तिः अस्ति इति कारणेन हरिः वैभवोपेतं जीवनम् एव करोति स्म । तस्य एकं विशालं हर्म्यम् आसीत् । अनेके कर्मकराः अपि आसन् । प्रतिदिनं तस्य गृहे कोऽपि कार्यक्रमः भवति स्म एव । सर्वे तेन सह आदरेण व्यवहरन्ति स्म । सः अन्येभ्यः यथाशक्ति साहाय्यमपि करोति स्म । ग्रामे सर्वे हरेः दानगुणं प्रशंसन्ति स्म ।

गिरिः तु एकस्मिन् लघुनि मृच्छदगृहे वसति स्म । अनुकूला एव पत्नी आसीत् इति कारणेन तदीयं जीवनं सुखेन प्रचलति स्म । तस्य गृहं सम्यक् एव आसीत् । परन्तु तत्र अमूल्यानि वस्तूनि कानि अपि न आसन् । सः उत्तमानि वस्त्राणि एव उपयुङ्क्ते स्म, किन्तु न अमूल्यानि । एवं सः सरलं जीवनम् एव बहु इच्छति स्म । सः अपि अन्येषां साहाय्यं करोति स्म, किन्तु ततः पूर्वं साहाय्यापेक्षिणः उद्दिश्य अनेकान् प्रश्नान् पृच्छति स्म । धनपेक्षिणः उत्तरं तृप्तिकरम् अस्ति चेदेव धनं ददाति स्म, न अन्यथा । अतः एव ग्रामे सर्वे तं 'महाकृपणः' इति वदन्ति स्म ।

ततः समीपस्थे कस्मिंश्चित् ग्रामे चलपतिः नाम कश्चित् सामान्यः गृहस्थः आसीत् । तस्य प्रदीपः नाम पुत्रः, जया नाम पुत्री च आसीत् । जया प्राप्तवयस्का अभवत् । तस्याः विवाहार्थं चलपतिः धनं सङ्गृह्णन् आसीत् ।

कदाचित् तस्य प्रतिवेशी धनिकः

दीर्घप्रयाणं कर्तुम् इच्छन् प्रयाणात् पूर्वं स्वस्य अङ्गुलीयकं चलपतये दत्त्वा - ''सर्वाणि अमूल्यानि वस्तूनि अहं सुरक्षितस्थाने स्थापितवान् । किन्तु एतत् अङ्गुलीयकमेकं हस्ते एव आसीत् इति कारणेन एतस्य स्थापनं विस्मृतवान् आसम् । प्रयाणसमये चोरेभ्यः भीतिः अस्ति एव । अपि च, इदम् अङ्गुलीयकं वंशपारम्पर्येण आगतम्, अमूल्यं चापि । अतः कृपया एतत् भवान् रक्षतु'' इति उक्तवान् ।



चलपतिः तत् अङ्गुलीयकं स्वीकृत्य, पुत्र्याः निमित्तं यानि आभरणानि कारितानि आसन् तैः सह एव स्थापितवान् । तं विषयं पत्नीं वक्तुं विस्मृतवान् सः।

अनन्तरदिने एव जयां द्रष्टुं वरपक्षीयाः आगताः । ते वधूम् इष्टवन्तः । यौतकविषये अपि सम्भाषणं समाप्तम् । अन्ते वरस्य माता वध्वाः आभरणानि द्रष्टुम् इष्टवती इति कारणेन जयायाः माता तां प्रकोष्ठं नीत्वा आभरणानि दर्शितवती । माता तत्र विद्यमानम् अङ्गुलीयकं बहु इष्टवती । अतः सा जयायाः मातरम् उद्दिश्य - ''अहम् एतत् अङ्गुलीयकं बहु इच्छामि । अस्माकं नूतनायाः बन्धुतायाः द्योतकत्वेन अहम् एतत् अङ्गुलीयकम् इदानीमेव नेतुम् इच्छामि । एतत् दत्तं चेत् विवाहः सम्पन्नः एव इति चिन्तयतु भवती'' इति हसन्ती उक्तवती ।

तत् अङ्गुलीयकं दृष्ट्वा जयायाः माता अपि आश्चर्यचकिता अभवत् । सा तद्विषये किमपि न जानाति स्म इति कारणेन 'पतिं पृष्ट्वा आगच्छामि' इति उक्त्वा गन्तुम् उद्युक्ता ।

तदा वरस्य माता तस्याः गमनं निवारयन्ती उक्तवती - ''एतादृशस्य लघुविषयस्य निमित्तम् अपि किं पतिः प्रष्टव्यः ? एतं विषयं मम पतिः जानाति चेत् कुपितः भवेत्'' इति उक्तवती ।

जयायाः मातुः मनसि अपि 'एषः कश्चन लघुविषयः' इति भावना आगता । अतः सा पतिम् अपृष्ट्वा एव तस्यै अङ्गुलीयकं दत्तवती । पश्चात् वरपक्षीयाः पुरोहितम् आनाय्य मुहूर्तमपि निश्चित्य स्वग्रामं गतवन्तः ।

''पतिः पृच्छति चेत् एवं वदामि'' इति निश्चित्य जयायाः माता अङ्गुलीयकस्य विषयं पतिं न उक्तवती एव ।



प्रामाणिकतायाम् अहं विश्वसिमि । किन्तु अस्माकं पूर्वजानाम् अङ्गुलीयकं त्यक्तुम् अहं न इच्छामि । कथमपि तत् अङ्गुलीयकम् अहं यथा प्राप्नुयां तथा करोतु । तदर्थं भवते सप्ताहद्वयात्मकं समयं ददामि'' इति ।

''अस्तु, तस्य प्रतिरूपात्मकम् अङ्गुलीयकम् अस्ति चेत् ददातु कृपया । तादृशमेव कारयित्वा वरस्य मात्रे दत्त्वा भवदीयं प्रत्यर्पयिष्यामि अहम्'' इति उक्तवान् चलपतिः ।

तत् श्रुत्वा धनिकः हसन् उक्तवान् - ''तस्य मूल्यं कियत् इति जानाति किं भवान् ? द्विसहस्रं रूप्यकाणि । तादृशम् अङ्गुलीयकं कारयितुं भवान् न शक्नोति'' इति ।

कानिचन दिनानि अतीतानि । प्रतिवेशी धनिकः प्रत्यागत्य चलपतिम् उक्तवान् - ''अङ्गुलीयकं ददातु'' इति । चलपतिः गत्वा आभरणपेटिकायाम् अन्वेषणं कृतवान् । किन्तु तत्र अङ्गुलीयकं न आसीत् । 'कुत्र गतं स्यात् अङ्गुलीयकम् ?' इति चिन्तयन् सः पत्नीं पृष्टवान् । पत्नी प्रवृत्तं सर्वं तस्मै निवेदितवती ।

क्षणं यावत् चलपतिः गतप्राणः इव अभवत् । 'पूर्वमेव मया पत्नी सूचनीया आसीत्' इति चिन्तयन् सः पश्चात्तापम् अनुभूतवान् । किन्तु जातं तु परिवर्तयितुं न शक्यते खलु ! अतः सः साक्षात् गत्वा धनिकं प्रवृत्तं सर्वं निवेद्य - ''इदानीं किं करोमि अहम् ?'' इति पृष्टवान् ।

तदा धनिकः उक्तवान् - ''भवतः

चलपतेः समीपे पुत्र्याः विवाहार्थं सङ्गृहीतानि पञ्चसहस्रं रूप्यकाणि यद्यपि आसन्, तथापि सः ततः व्ययं कर्तुं न इच्छति स्म । ततः व्ययः क्रियते चेत् विवाहार्थं धनं पर्याप्तं न भवेत् इति आतङ्कः आसीत् तस्य । तथापि - 'गौरवरक्षणार्थं कथमपि तस्य प्रतिरूपात्मकम् अङ्गुलीयकं कारणीयमेव' इति निश्चित्य चलपतिः - ''तस्य प्रतिरूपात्मकम् अङ्गुलीयकं कुतश्चित् दापयतु'' इति धनिकं सानुरोधम् उक्तवान् ।

धनिकः किञ्चित् चिन्तयित्वा उक्तवान् - ''मम पितामहस्य हस्ते समानाकाराणि चत्वारि अङ्गुलीयकानि आसन् । तस्य द्वौ पुत्रौ । तयोः कृते तानि अङ्गुलीयकानि विभज्य दत्तवान् सः । मम पितुः अपि

आवां द्वौ पुत्रौ इति कारणेन मम पिता मह्यं, मम अनुजाय च एकैकम् अङ्गुलीयकं दत्तवान् । मम अनुजः वाणिज्यार्थं मलयद्वीपं गतवान् अस्ति । अतः तेन मेलितुं भवान् न शक्नोति । मम ज्येष्ठपुत्रस्य रविचन्द्रस्य द्वौ पुत्रौ हरिः गिरिः च इदानीं स्तः । तौ द्वौ अपि एकस्मिन् एव ग्रामे निवसतः । तयोः हरिः महान् उदारः इति, गिरिः नितरां कृपणः इति च श्रूयते । भवान् तयोः अन्यतरात् अङ्गुलीयकं प्राप्तुं शक्नुयात्'' इति ।

अनन्तरं चलपतिः स्वपुत्रं प्रदीपम् आहूय धनिकेन उक्तं सर्वं विवृत्य - ''एषः अस्माकं वंशस्य गौरवस्य विषयः । अतः भवान् कमपि उपायम् आश्रित्य कथमपि प्रतिरूपात्मकम् अङ्गुलीयकम् आनयतु'' इति उक्तवान् ।

प्रदीपः शीघ्रमेव हरिगिर्योः ग्रामं प्राप्तवान् । प्रथमं हरिणा मिलित्वा - ''श्रीमन्, भवतः साहाय्यम् अपेक्षमाणः अहम् आगतः अस्मि'' इति वदन् स्वस्य समस्यां विस्तरेण निवेदयितुम् उद्युक्तः अभवत् ।

तदा हरेः गृहे कश्चन कार्यक्रमः प्रचलन् आसीत् इति कारणेन सः प्रदीपम् उक्तवान् - ''भवतः कथां श्रोतुं मम अधुना समयः नास्ति । भवान् यत् अपेक्षते तत् वदतु । अहं यथाशक्ति साहाय्यं करोमि'' इति उक्तवान् ।

''श्रीमन् ! भवतः अङ्गुलीयकस्य प्रतिकृतिः मह्यम् अपेक्षिता'' इति उक्तवान् प्रदीपः ।

तदा हरिः इतोऽपि त्वरां प्रदर्शयन् - ''तत् अङ्गुलीयकम् अधुना पूजागृहे अस्ति इति कारणेन प्रतिकृतिं कारयित्वा दातुं न शक्नोमि । मम अनुजस्य समीपे अपि





तादृशम् एव अङ्गुलीयकम् अस्ति । किन्तु सः कृपणः । प्रतिकृतिं स्वयं कृत्वा न दद्यात् । अतः भवान् एतानि दश रूप्यकाणि स्वीकरोतु । एतत् धनं प्रतिकृतिनिमित्तम् अन्यव्ययार्थं च पर्याप्तं भवति'' इति प्रदीपेन उच्यमानम् अशृण्वन् तस्य हस्ते दश रूप्यकाणि अनुरोधपूर्वकं स्थापयित्वा तं ततः प्रेषितवान् । आगतवन्तः सर्वे हरेः दानगुणं श्लाघितवन्तः ।

प्रदीपः तस्मात् धनं स्वीकर्तुं न इष्टवान् । तथापि किमपि कर्तुम् अशक्तः सः विना प्रतिवचनं तत् स्वीकृत्य कृपणः इति प्रसिद्धस्य गिरेः गृहम् अनिच्छन् एव प्रस्थितवान् ।

आगतं प्रदीपम् आदरेण स्वागतीकृत्य पातुं शीतलं मधुरं च जलं दत्तवान् गिरिः । प्रदीपः आगमनस्य कारणं तम् उक्तवान् । ततः गिरिः अपि कांश्चन प्रश्नान् पृष्ट्वा विषयं सर्वं सम्यक् ज्ञातवान् ।

''एषः विषयः बहु सूक्ष्मः । अतः बहु जागरूकतया व्यवहरणीयम् । मम पूर्वजैः प्राप्तम् इदम् अङ्गुलीयकं बहु अमूल्यमपि । अतः एतत् भवते दातुं न शक्नोमि । अपि च एतादृशम् अपरम् अङ्गुलीयकं वज्रपुरस्य रत्नगुप्तः एव कर्तुं शक्नोति, न अन्यः । कोटीश्वरः सः एतादृशं लघुकार्यं न अङ्गीकरोति । तथापि भवता सह आगत्य अहं कथमपि अङ्गीकारयिष्यामि । अस्माकं मैत्रीकारणेन सः कार्यं कृत्वा दद्यात् एव । एतादृशमेव अन्यत् अङ्गुलीयकं कारयाम'' इति उक्तवान् गिरिः ।

''श्रीमन् ! मम समीपे अधुना तावत् धनं नास्ति । गृहं गत्वा मया धनम् आनेतव्यम्'' इति उक्तवान् प्रदीपः ।

तदा गिरिः उक्तवान् - ''इदानीं भवतः पित्रा पुत्र्याः विवाहनिमित्तं सङ्गृहीतं धनम् एव खलु दातव्यं भवति ? तथा चेत् अनन्तरं विवाहार्थं सः कुतश्चित् ऋणरूपेण धनम् आनयेत् एव खलु ? तत् ऋणम् अहम् एव दास्यामि । अतः अलं चिन्तया'' इति ।

गिरेः उदारतां दृष्ट्वा प्रदीपः आश्चर्यचकितः अभवत् ।

अनन्तरं तौ वज्रपुरं गतवन्तौ । प्रयाणार्थं पञ्चविंशतिः रूप्यकाणि व्ययितानि । तत्र एकस्मिन् वसतिगृहे तौ वासं कृतवन्तौ । दिनद्वयाभ्यन्तरे एव गिरिः न केवलं

स्वाङ्गुलीयकसदृशम् अङ्गुलीयकं कारितवान्, अपि तु रत्नगुप्तेन सह चर्चां कृत्वा मूल्ये सार्धैकशतरूप्यकाणां न्यूनतां कारितवान् ।

ततः अङ्गुलीयकं स्वीकृत्य प्रदीपेन सह वरस्य गृहं गत्वा वरपितरम् उद्दिश्य - ''श्रीमन्, वधूपरीक्षादिने वध्वाः माता भवतः पत्न्यै एकम् अङ्गुलीयकं दत्तवती । तत् अङ्गुलीयकं स्वकीयं न इति सा न जानाति स्म । तस्य उपरि अन्यस्य नाम अस्ति । लघ्वक्षरैः लिखितमिति कारणेन न दृश्यते तत् नाम । पत्न्या अज्ञानेन कृतेन कार्येण खिन्नः चलपतिः तादृशमेव नूतनम् अङ्गुलीयकं कारयित्वा प्रेषितवान् अस्ति । कृपया एतत् स्वीकृत्य तत् ददातु इति प्रार्थये'' इति उक्तवान् ।



वरस्य पिता सन्तोषेण नूतनम् अङ्गुलीयकं पत्न्यै दत्त्वा पूरातनं गिरये प्रत्यर्पयन् उक्तवान् - ''चलपतिसदृशाः जनाः लोके बहु विरलाः । वयं सर्वे बहु सन्तुष्टाः स्मः । एतं विषयं भवान् तं वदतु'' इति ।

मार्गे सर्वत्र सर्वोऽपि व्ययः गिरिणा एव निरूढः । ततः तौ चलपतेः गृहं गतवन्तौ । प्रदीपः प्रवृत्तं सर्वं पितरं विस्तरेण निवेदितवान् ।

तदा चलपतिः गिरेः हस्तं गृहीत्वा - ''श्रीमन्, भवता योग्यरूपेण व्यवहृत्य वरपक्षीयाः तोषिताः, अस्माकं कुलस्य गौरवं रक्षितम् अपि । समये धनमपि दत्त्वा बहु उपकृतवान् अस्ति भवान् । भवतः ऋणं शीघ्रमेव प्रत्यर्पयिष्यामः वयम् । नितराम् उपकृतवते भवते कथं कृतज्ञताः समर्पणीयाः इत्येव अहं न जानामि'' इति उक्तवान् ।

गिरिः मन्दं स्वहस्तं प्रतिस्वीकुर्वन् - ''भोः, अत्र कः विशेषः अस्ति ? अन्येषाम् उपकारकरणं सर्वस्यापि मनुष्यस्य कर्तव्यम् । भगवतः कृपया जीवनार्थं मम कोऽपि क्लेशः नास्ति । ऋणविषये अधिका चिन्ता न करणीया भवता । यदा भवान् शक्ष्यति तदा प्रत्यर्पयितुम् अर्हति । न प्रत्यर्प्यते चेदपि न काऽपि चिन्ता'' इति उक्तवान् ।

तदा प्रदीपः आश्चर्येण - ''भवान् महाकृपणः इति सर्वे वदन्ति । भ्रातरौ भवन्तौ यद्यपि ऐश्वर्येण समानौ, तथापि भवतः अग्रजः हरिः वैभवोपेतं जीवनं

करोति । भवान् सरलं जीवनं करोति । योग्यानां साहाय्यं च करोति गोप्यरूपेण । भवतः दानं कदापि प्रकाशितं न भवति । तस्य कारणं किम् इति अहं न अवगच्छामि'' इति उक्तवान् ।

तत् श्रुत्वा गिरिः हसन् - ''प्रदीपवर्य ! यः विना विचारणेन दानं करोति सः दानशूरः इति प्रसिद्धः भवति सहजतया । तेन तु भिक्षुकाणां संख्यावर्धनं भवेत्, न तु अन्यत् किमपि प्रयोजनम् । याचकस्य आवश्यकतानुगुणं साहाय्यकरणेनैव मनसः तृप्तिः भवति । तथा तृप्तः प्रचारं न अपेक्षते। पात्रापात्रविवेकं विना दानेन प्रसिद्धिः महती प्राप्येत । किन्तु ततः दानस्वीकर्तॄणाम् उद्धारः विशेषतः न भवति । याचकाः स्वावलम्बिनः अपि यथा भवेयुः तथा प्रयत्नः एव श्रेयस्करः । यद्यपि मम समीपे पित्रार्जितं प्रभूतं धनम् अस्ति, तथापि तत् स्वकीयं न भावयामि अहम् । पुत्रेभ्यः तस्य प्रापणमेव मम कर्तव्यम् । अतः अहं यत् सम्पादयामि तेन एव सरलं जीवनं यापयामि, अन्येषां साहाय्यं करोमि च । मम धनम् अपर्याप्तं भवति चेत् कदाचित् अन्येभ्यः दातुं पितुः धनं स्वीकरोमि । धनस्वीकर्तारः यदा धनं प्रत्यर्पयन्ति तदा तत् धनं पितृधने योजयामि । किन्तु क्वचित् केचन ऋणं स्वीकृत्य न प्रत्यर्पयन्ति एव । तदा तत् धनमपि मया एव पूरणीयं भवति । अतः सरलं जीवनं कृत्वा सञ्चयं कृत्वा तत् अहमेव पूरयामि । अतः एव सर्वे मां महाकृपणं भावयन्ति'' इति उक्तवान् ।

अनन्तरं तस्य ग्रामगमनार्थं चलपतिः शकटम् आनायितवान् । तदा गिरिः शकटं प्रतिप्रेष्य - ''भोः ! एतस्य आवश्यकता नास्ति । इदानीं भवता पुत्र्याः विवाहार्थं धनसञ्चयः करणीयः अस्ति । यदि अपेक्षितं तर्हि अहं स्वयं धनं दत्त्वा शकटेन गच्छामि'' इति उक्त्वा ततः प्रस्थितवान् एव ।

गिरिः न कृपणः, अपि तु तस्मात् ये साहाय्यं प्राप्तवन्तः ते एव कृपणाः इति प्रदीपः ज्ञातवान् । अतः सः धनसञ्चयस्य अभ्यासं कृत्वा वर्षाभ्यन्तरे गिरेः ऋणं प्रत्यर्पयितुं पितुः साहाय्यं कृतवान् ।





# अधर्मशाला

एकदा रङ्गपुरस्य ज्येष्ठाः सम्भूय पथिकानां सौकर्यार्थं ग्रामस्य मुख्य-मार्गस्य समीपे एकां धर्मशालां निर्मितवन्तः। तत्र पाचिकां, लिपिकारं, कर्मकरं च नियोजितवन्तः च।

कानिचन दिनानि धर्मशाला निरीक्षितरूपेण उत्तमतया एव प्राचलत्। सामान्यतया पथिकाः धर्मशालायां भोजनं कृत्वा, निद्रां कृत्वा अनन्तरदिने प्रयाणम् अनुवर्तयन्ति स्म। केचन धनिकाः धर्मशालायाः त्रिभ्यः कार्यकर्तृभ्यः अपि स्वेच्छानुसारं धनं दत्त्वा गच्छन्ति स्म।

एवं धनस्वीकरणस्य अभ्यासः जातः लिपिकारादीनाम्। अतः ते धर्मशालाम् आगन्तृभ्यः सर्वेभ्यः अपि धनस्य सङ्ग्रहणम् आरब्धवन्तः। धनं ये न यच्छन्ति तेभ्यः धर्मशालां प्रवेष्टुम् अपि अनुमतिं न ददति स्म ते। ये धनं न यच्छन्ति तेषां कृते वृद्धा भोजनार्थं कदलीपर्णम् एव न स्थापयति स्म। धनं विना लिपिकारः शयनार्थं स्थलमेव न दर्शयति स्म। एवं सा धर्मशाला सवसतिकोपहारमन्दिरत्वेन परिवर्तिता अभवत्। एतं विचारं ग्रामजनाः यथा न जानीयुः तथा जागरूकता स्वीकृता आसीत् तैः।

कदाचित् कश्चित् युवकः आर्यापुरं गच्छन् आसीत्। रङ्गपुरस्य समीपे आगमनसमये अन्धकारः अभवत्। अतः सः वासार्थं रङ्गपुरस्य धर्मशालां गतवान्। परन्तु तस्य समीपे धनं न आसीत् इति कारणेन धर्मशालायाः कार्यकर्तारः तस्मै धर्मशालां प्रवेष्टुमेव अनुमतिं न दत्तवन्तः।

सः युवकः तस्यां रात्रौ आहारं विना धर्मशालायाः बहिः कस्यचित् वृक्षस्य अधः निद्रां कृत्वा अनन्तरदिने आर्यापुरं गतवान्। तत्र मित्राणि स्वकीयम् अनुभवम् उक्तवान्।

*'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'*

एतं विषयं श्रुत्वा रङ्गराजः नाम तद्ग्रामीणः चिन्तितवान् यत् तस्याः धर्मशालायाः कर्मकराः सम्यक् शिक्षणीयाः इति । अनन्तरं सः केनचित् कर्मकरेण सह ततः प्रस्थितवान् । रात्रिभोजनसमये सः रङ्गपुरस्य धर्मशालां प्राप्तवान् । ततः सः कर्मकरम् उद्दिश्य - ''भोः, भवान् ग्रामं गत्वा 'रङ्गपुरस्य भूस्वामिनः श्यालः धर्मशालायाम् अस्ति' इति ग्रामस्य ज्येष्ठान् सूचयतु'' इति उक्त्वा तं प्रेषितवान् । स्वयं धर्मशालां प्रविष्टवान् च ।

अनुक्षणं धर्मशालायाः कर्मकरः रङ्गराजस्य समीपम् आगत्य - ''धनं ददातु, स्नानार्थं जलं ददामि'' इति उक्तवान् ।

रङ्गराजः बधिरः इव अभिनयन् - ''आम् । अहमेकः एव आगतवान् अस्मि'' इति उक्त्वा धर्मशालायाः अन्तः गतवान् ।

भोजनशालायां वृद्धा पर्णानि प्रसार्य भोजनं परिवेषयन्ती आसीत् । सा रङ्गराजं दृष्ट्वा - ''धनं ददातु । भवदर्थम् अपि पर्णं प्रसारयामि'' इति उक्तवती ।

''मम पथ्यं किमपि नास्ति । सर्वं खादामि'' इति वदन् रङ्गराजः झटिति गत्वा अन्नव्यञ्जनादियुक्तस्य कस्यचित् पर्णस्य पुरतः उपविष्टवान् एव ।

''उत्तिष्ठतु तावत् । तत् पर्णं भवते न स्थापितम्'' इति वृद्धा उच्चैः उक्तवती । रङ्गराजः अश्रुतवान् इव अभिनयं कृतवान् ।

''सः तत्र उपविशतु नाम ! सः बधिरः अस्ति । अतः अन्यत्र अपरं पर्णं प्रसारयतु'' इति ये भोजनं कर्तुं आगतवन्तः आसन् ते उक्तवन्तः ।

'भोजनार्थं उपविष्टस्य उत्थापनं महापापाय' इति ते उक्तवन्तः इति कारणेन वृद्धा मौनम् आश्रितवती ।

रङ्गराजः पूर्णोदरं भोजनं कृत्वा



लिपिकारसमीपं गत्वा -''मदर्थं शय्या कुत्र प्रसारिता अस्ति ?'' इति पृष्टवान् ।

''तदर्थं धनं दातव्यम्'' इति लिपिकारः उच्चैः उक्तवान् ।

''यदि उत्तमा शय्या स्यात् तर्हि ताम् एव प्रसारयतु'' इति उक्तवान् रङ्गराजः ।

लिपिकारः द्वारसमीपं गत्वा कर्मकरम् उक्तवान् - ''भोः, एतं बधिरं बहिः प्रेषयतु । एषः एतां धर्मशालां स्वस्य पितामहस्य सम्पत्तिं भावयति इति भाति'' इति ।

कर्मकरस्य लिपिकारस्य च आगमनात् पूर्वम् एव रङ्गराजः अन्येषां निमित्तं प्रसारितायां शय्यायां शयनं कृतवान् एव । निद्रां प्राप्तवान् इव अभिनयम् अपि कृतवान् सः ।

कर्मकरः आगत्य रङ्गराजम् उत्थापितवान् । रङ्गराजः नेत्रे उन्मीलयन् - ''कः विशेषः ?'' इति पृष्टवान् ।

''भवान् प्रथमं बहिः गच्छतु'' इति उक्तवान् कर्मकरः ।

एतावता ग्रामस्य द्वित्राः ज्येष्ठाः त्वरया धर्मशालां प्रविश्य - ''भूस्वामिनः श्यालः आगतवान् अस्ति खलु ? सः कुत्र अस्ति ?'' इति पृष्टवन्तः ।

तदा रङ्गराजः - ''स्वामिन् ! भूस्वामिनः श्यालस्य विषये अनन्तरं चिन्तयाम । धनं न दत्तवान् इति कारणतः एते एतस्यां रात्रौ मां धर्मशालातः बहिः प्रेषयन्तः सन्ति, पश्यन्तु'' इति वदन् ग्रामस्य ज्येष्ठान् प्रवृत्तं सर्वं निवेदितवान् ।

एतत् ज्ञात्वा ग्रामस्य जनाः दिग्भ्रान्ताः । ते यदा अन्यान् पथिकान् पृष्टवन्तः तदा ते अपि उक्तवन्तः यत् 'कर्मकराय, पाचिकायै, लिपिकाराय च वयम् अपि धनं दत्तवन्तः' इति ।

ग्रामस्य ज्येष्ठाः विचारणाम् आरब्धवन्तः । धर्मशालायां स्थिताः त्रयः अपि कर्मकराः प्रयाणिकेभ्यः धनं सङ्गृहीतवन्तः इत्येतत् सप्रमाणं निरूपितम् अभवत् ।

ग्रामस्य ज्येष्ठाः तेभ्यः दण्डं दत्त्वा तान् उद्योगात् निष्कासितवन्तः । अन्यान् नूतनान् जनान् नियोज्य 'तदा तदा आगत्य धर्मशालायाः व्यवहारः परिशीलनीयः' इति निर्णयं कृतवन्तः च ।



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां नवम्बर् - १९९७ मासे प्रकटयिष्यामः ।



S.G. SESHAGIRI



MAHANTESH C. MORABAD

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टम्बर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-काई) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

**'जुलै'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **धनिकस्य पुत्रोऽयं सुखेन याति ।**

द्वितीयचित्रम् - **निर्धनपुत्रोऽयं श्रमं करोति ।**

प्रेषिका - जि.एस्. गीता, श्रीनिधिनिलयः, बझारवीथी, अरसीकेरे - ५७३ १०३ (कर्णाटकम्)




Printed by B.V. REDDI at Prasad Process Private Ltd., Chandamama Buildings, Chennai - 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, 188, N.S.K. Salai, Vadapalani, Chennai - 600 026 (India) Editor : NAGI REDDI.